A BRIGHT NEW TRADITION IS BUILT
by
THE READERS OF

# THE HERITAGE



The span of one and half years is not a long time, yet given will and goodwill, enough of a time to build a healthy, meaningful and intelligent reading tradition.

SLOWLY BUT STEADILY THE ELITE OF INDIA AND MANY LOVERS OF INDIAN CULTURE ABROAD ARE UNITING IN THE HERITAGE





* THE HERITAGE reveals the fourth dimension of life to you—through series like "*The Other Experience*" and "Fables and Fantasies for Adults".
* THE HERITAGE brings to you the best of creative literature of Contemporary India—stories, *novels* and poems.
* THE HERITAGE features pictorial articles on places and monuments delving into their *roots*.
* THE HERITAGE takes you to a tour of the *Little-Known India*.




FEATURES AND FICTION FOR TODAY AND TOMORROW

# सामञ्जस्यम्

**पुराणमित्येव न साधु सर्वं**
**न चापि काव्यं [किञ्चित् (?)] नवमित्यवद्यम्।**
**सन्तः परीक्ष्यान्यतरद् भजन्ते**
**मूढः परप्रत्ययनेयबुद्धिः।**

प्राचीनं किञ्चित् 'प्राचीनम्' इति कारणतः उत्कृष्टं भवितुं न अर्हति। नवीनम् अपि नावीन्यकारणतः उपेक्षां न अर्हति। विवेकिनः वस्तुनः सारासारतां विचार्य उत्तमं वस्तु (विचारं वा) सेवन्ते। मूढाः तु वस्तुनः योग्यताम् अपरिशीलयन्तः अन्येषां वचनस्य अन्धानुसरणं कुर्वन्ति।

इदानीन्तनेषु जनेषु वयं पश्यामः यत् बहवः मानसिकं वैचारिकं च सामञ्जस्यं स्थापयितुम् असमर्थाः सन्तः बहुधा क्लेशम् अनुभवन्ति इति। अत्र कारणं प्राचीननवीनयोः संघर्षः। केचन प्रतिपादयन्ति - 'यत् प्राचीनं तदेव श्रेष्ठं, यतः तत् सुदीर्घचिन्तनस्य फलम्। तस्य दीर्घकालिकस्थितिः एव अत्र प्रमाणम्। आधुनिकं यत् अस्ति तत् प्रायः साररहितम्। पर्याप्तचिन्तनस्य अभावः तत्र दृश्यते' इति।

अन्ये केचन प्रतिपादयन्ति - 'प्राचीनं यत् भवति तत् कालबाह्यम्। यथा तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति तथा केचन व्यामोहेन प्राचीनं सेवेरन्। बौद्धिकप्रगत्या आधुनिकं सिध्यति इत्यतः तदेव उत्कृष्टम्" इति।

वस्तुतः उभयपक्षेऽपि अतिरेकता दृश्यते। प्राचीनं वा भवतु, नवीनं वा भवतु, यदि तत् सारभूतं तर्हि स्वीकारयोग्यम् एव। प्राचीनता-नावीन्यादयः वा आकारादि-बाह्यस्वरूपाणि वा गुणनिर्णये महत्त्वपूर्णं स्थानं न अर्हन्ति।

यथा प्राचीनानि मूलानि नवीनाः पल्लवाः च वृक्षस्य शोभां सामर्थ्यं च वर्धयन्ति, तथैव प्राचीनं तत्त्वं नूतनैः विचारैः यदा युक्तं सम्मिलितं भवति तदा एव लोकस्य हितम्।

यदि विवेचनाशक्तिः समीचीना तर्हि वयं सर्वत्र सामञ्जस्यं सम्पादयितुं शक्नुमः। अन्यथा संघर्षः, उद्वेग, कोप-तापादयः, अनिष्टाः च अवश्यम् आपतिष्यन्ति।

# लेखनदोषाः

शिष्यः - आचार्य, अनुस्वारस्य अनुनासिकस्य च कः भेदः?

आचार्यः - बिन्दुरूपेण ( ं ) यत् लिख्यते सः अनुस्वारः। ञ्म्ङ्ण्नादयः अनुनासिकाः इति उच्यन्ते यतः एतेषाम् उच्चारणे नासिकायाः उपयोगः क्रियते। तदस्तु, एवं जिज्ञासा किमर्थम् उत्पन्ना?

शि - शान्तः, कङ्कणम्, अन्तरङ्गम् इत्यादिषु केचन अनुस्वारं योजयन्तः शांतः, कंकणम्, अंतरंगं इति लिखन्ति।

आ - कुत्र अनुस्वारः कुत्र अनुनासिकः इति किल सन्देहः भवतः?

शि - आम्, तथैव यत्र शब्दद्वयं भवति - 'गृहम् आगतः' इत्यादौ - तत्र गृहशब्दान्ते अनुस्वारः वा अनुनासिकः वा इति सन्देहः।

आ - शान्तः, कङ्कणम् इत्यादौ अनुस्वारलेखनं दोषाय एव। अतः तत्र तत्तद्वर्गस्य (अग्रे स्थितस्य) पञ्चमाक्षरं लेखनीयम्। यथा - कङ्कणम्, अञ्चलम्, कण्टकम्, कान्तः, सम्पादनम् इत्यादयः।

शि - सङ्घटनं, सङ्ख्या इत्यादौ अनुस्वारः अपि लेखितुं शक्यः किल?

आ - युक्तमेव उक्तम्। किन्तु कुत्रचित् अनुस्वारः कुत्रचित् अनुनासिकः इति चेत् पुनः विवेचने कष्टम्। अतः सर्वत्र तत्तद्वर्गस्य पञ्चमाक्षरं लिखतु। तदा दोषस्य अवकाशः एव न भवति।

शि - 'गृहम् आगतः' इत्यादौ मकारः सहजः, उत अनुस्वारः?

आ - वस्तुतः (पदान्ते) मकारः एव सर्वत्र सहजः। यथा - शालां गच्छति। *व्यञ्जने परे तस्य मकारस्य अनुस्वारः। स्वरपरत्वे तु अनुस्वारप्राप्तौ निमित्तम् एव नास्ति। अतः

---

*मोऽनुस्वारः (हलि) - पाणिनिसूत्रम्।

सहजतया मकारः एव अवशिष्यते। तथा च 'गृहम् आगतः' इति लेखनम् एव उचितम्। 'गृहं आगतः' इति अनुस्वारलेखनं दोषाय एव।

वाक्यान्ते अपि सर्वदा अनुनासिकवर्णः (मकारः) एव लेखनीयः। यथा - 'यानम् आगतम्।' 'केन उक्तम्?'

शि - 'तत्वम्' 'महत्वम्' इत्यादिरूपेण लिखन्ति केचन। तत्र तकारद्वयं भवेत् किल?

आ - आम्, व्यावहारिकाः केचन शब्दाः सन्ति, येषां लेखने जागरूकता अपेक्षिता। ते च-

| | |
|---|---|
| तत्त्वम् | (तकारद्वयम्) |
| महत्त्वम् | ( ,, ) |
| दत्त्वा | ( ,, ) |
| भित्त्वा | ( ,, ) |
| सात्त्विकः | ( ,, ) |
| उज्ज्वलः | (जकारद्वयम्) |
| तज्ज्ञः | (जकारद्वयम्) |
| संन्यासी | (अनुस्वारः) |
| निःस्थानम् | (मध्ये विसर्गः सकारः वा) |

शि - समस्ते पदे यत्र सन्धिः अनिवार्या तत्र केचन सन्धिं न कुर्वन्ति। किम् एतत् उचितम्?

आ - उदाहरणानि वदत् .....

शि - सार्ध-एकादशवादनम्, त्रि-अशीतिः इत्यादयः।

आ - वस्तुतः अत्र सन्धिः अनिवार्या एव। किन्तु पठनसौलभ्यदृष्ट्या प्रायः कैश्चित् सन्धिम् अकृत्वा लिख्यते इति मन्ये। अत्र तु एवं करणीयम् - यत्र सन्धिः नित्यः तत्र तस्य ज्ञापनार्थम् एका रेखिका (-) लेखनीया। (उदा– त्रि-अशीतिः) तस्य च अर्थः भवति- 'सन्धिः एव अभिप्रेत , पठनसौलभ्यदृष्ट्या विभज्य लिखितम्' इति।

शि - पठने कथम्?

आ - पठनं तु सार्धैकादशवादनम्, त्र्यशीतिः इति सन्धिसहितम् एव उचितम्।





# चन्दमामा

जुलै १९८६

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २.५०

वार्षिकं ग्राहकशुल्कम् रू. ३०.००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

इदानीन्तन संस्कृतज्ञान् दृष्ट्वा प्राचीनपण्डिताः वदन्ति- 'एतेषां पल्लवग्राहि पाण्डित्यं, न तु तलस्पर्शि पाण्डित्यम्' इति। वस्तुतः विचार्यमाणे तेषां वचनेषु सत्यता अस्ति एव। प्राचीनाः किं, पञ्चाशत्वर्षेभ्यः पूर्वं ये संस्कृतं पठन्ति स्म ते एकस्मिन् शास्त्रे तु निपुणाः भवन्ति स्म एव। तदतिरिच्य शास्त्रद्वये शास्त्रत्रये वा विशेषज्ञानं प्राप्नुवन्ति स्म। किन्तु इदानीन्तनाः तथा न सन्ति। कथञ्चित् एकस्मिन् शास्त्रे उत्तीर्णतां प्राप्नुवन्ति। ततश्च शास्त्राध्ययनं समाप्तम् एव इति चिन्तयित्वा लौकिकजीवने समासक्ताः भवति! एवं स्थिते शास्त्रान्तरे अध्ययनं न प्रवर्तते इति किं पुनः वक्तव्यम्? ये महाविद्यालयेषु पठन्ति ते शास्त्रस्य अध्ययनपद्धतिम् अपि विशेषतः न जानन्ति! एवं तर्हि शास्त्राणां रक्षणं कैः कर्तव्यम्? किं सामान्याः एतत्कार्यं कर्तुं शक्नुवन्ति?

वस्तुतः एतत् संस्कृतपण्डितानाम् एव कर्तव्यम्। संस्कृतपण्डिताः एतद्दृष्ट्या सगम्भीरं चिन्तयन्तः कार्यप्रवृत्ताः भवेयुः। 'उद्योगः प्राप्तः चेत् अध्ययनं समाप्तम्' इति दुर्भावनां मनोभूमिकातः निष्कास्य निरन्तरे अध्ययने आसक्ताः भवेयुः।

सम्पुटः-३ जुलै-८६ सञ्चिका-४

प्रतिकृतिमूल्यम् रू. २-५० *वार्षिकं ग्राहकशुल्कं रू. ३०-००






रसप्रश्नाः

# किम् उत्तरम् एतेषाम्?

१. संस्कृते अतिप्राचीनस्य रूपकस्य नाम किम्?

२. कादम्बरी (गद्य) ग्रन्थस्य आकरग्रन्थः कः?

३. गद्यकाव्ये कति प्रकाराः?

४. व्याकरणमहाभाष्ये उल्लिखितौ गद्यग्रन्थौ कौ?

५. उपलभ्यमानेषु गद्यग्रन्थेषु प्राचीनतमः कः?

६. बृहत्कथा कया भाषया लिखिता अस्ति?

७. संस्कृतस्य प्रथमः चम्पूग्रन्थः कः?

८. हितोपदेशस्य कर्ता कः?

९. शाकुन्लनाटकस्य नाम कविना किम् इति निर्दिष्टम्?

१०. कालिदासस्य खण्डकाव्यद्वयस्य नाम किम्?

उत्तराणि-

१. शारीपुत्रप्रकरणम्, २. बृहत्कथा, ३. कथा आख्यायिका इति प्रकारद्वयम्, ४. कंसवधम् बलिबन्धः च, ५. वासवदत्ता, ६. पैशाचीभाषया, ७. नलचम्पूः, ८. नारायणभट्टः, ९. अभिज्ञानशाकुन्तलम्, १०. मेघदूतम्, ऋतुसंहारः।

## रसवार्ता:

### धूमपानेन अपायः



धूमपानेन प्रपञ्चे प्रतिदिनं सामान्यतः २९,००० जनाः अकालमरणं प्राप्नुवन्ति। अन्ये केचन व्याधिग्रस्ताः भवन्ति। सद्यःकाले कलकत्तानगरे प्रवृत्तायां चतुर्थायां कुटुम्बसंक्षेमसभायाम् एषः विषयः प्रकटितः अस्ति।

### मृत्युमुखात् आगता महिला



चीनादेशे यांगुबोक्वान् नामिका २२ वर्षीया महिला द्विचक्रिकया प्रवासार्थं प्रस्थिता। समीपतरं मार्गम् अन्विष्य गच्छन्ती सा घनीभूतायाः नद्याः उपरि गतवती। तन्मध्ये हिमस्य द्रवीभवनेन सा जले पतिता अभवत्। समीपस्थाः तत्र आगत्य ताम् उन्नीय चिकित्सालयं नीतवन्तः। किन्तु इतःपूर्वम् एव तस्याः हृदयस्पन्दनं स्थगितम् अभवत्। अन्ते ८० निमेषाणाम् अनन्तरं तस्याः हृदयस्य स्पन्दनम् आरब्धम्।

### नेत्रसंरक्षणम्



एषु दिनेषु देहलीनगरे आरोग्यरक्षणदृष्ट्या काचित् गोष्ठी आयोजिता आसीत्। एतस्याः गोष्ठ्याः कारणतः सिद्धं यत् विविधैः कारणैः प्रतिवर्षं ४,००० बालकाः दृष्टिहीनाः भवन्ति इति। नवति लक्षसङ्ख्याकाः अन्धाः भारते एव सन्ति। अतः प्रपञ्चे यावन्तः अन्धाः सन्ति तेषु त्रिषु एकः अंशः भारते एव अस्ति इति सिध्यति।

# भवन्तः जानन्ति वा?

१. नेपोलियन् जन्म कस्मिन् द्वीपे अभवत्?
२. अमेरिकादेशस्य स्वातन्त्र्यसङ्ग्रामे नायकः कः आसीत्?
३. देहलीसंस्थानस्य सिंहासनम् अधिष्ठितः प्रथमा मुस्लिम् वनिता का?
४. १५ वर्षाणि यावत् कः मोगलचक्रवर्ती स्वराज्यं त्यक्त्वा पार्श्वराज्ये आसीत्।
५. 'नैटिङ्गेल् आफ् इण्डिया' इति प्रसिद्धा व्यक्तिः का?

(उत्तराणि ६५ तमे पृष्ठे)

# दुर्मदः

देवेन्द्रस्य सभायां स्थितासु अप्सरास्त्रीषु ऊर्वशी अन्यतमा। तस्याः सौन्दर्यातिशयं दृष्ट्वा आकृष्टः दुर्मदो नाम गन्धर्वः तां परिणेतुम् इष्टवान्। किन्तु ऊर्वशी तत् न अङ्गीकृतवती।

ऊर्वशी चन्द्रवंशीयं राजानं पुरूरवचक्रवर्तिनं परिणेतुं निश्चितवती। एकदा पूर्णिमायां रात्रौ ऊर्वशी पुरूरवसं द्रष्टुं नन्दनवने कस्यचित् वृक्षस्य अधः चन्द्रशिलाफलकस्य उपरि उपविश्य प्रियकरं निरीक्षमाणा आसीत्।

एतां वार्तां दुर्मदः ज्ञातवान्। 'एषः एव सुसमयः' इति चिन्तयन् दुर्मदः पुरूरवसः वेषं धृत्वा ऊर्वशीसमीपम् आगतवान्। मन्दहासपूर्वकं स्वागतीकुर्वत्याः ऊर्वश्याः कण्ठे पुष्पमालां स्थापितवान् दुर्मदः। उभौ अपि सन्तोषेण वार्तालापमग्नौ जातौ।

किञ्चित्कालानन्तरं नैजः पुरूरवाः तत्र आगतवान्। तं दृष्ट्वा पुरूरववेषेण स्थितः दुर्मदः कृतकहासं प्रदर्शितवान्। तदा प्रवृत्तां वञ्चनाम् ऊर्वशी ज्ञातवती। कुपिता सा 'भवान् राक्षसः भवतु' इति शापं दत्तवती।

आत्मनः अपराधं क्षान्तुं, शापम् उपसंहर्तुं च दुर्मदः ऊर्वशीं प्रार्थितवान्। तदा ऊर्वशी - "भूलोके मानवरूपेण जन्म प्राप्य युद्धे दुर्मरणं प्राप्य शापविमुक्तः भवतु" इति शापविमोचनोपायं सूचितवती।





# पुण्यफलम्

पूर्वं कौमुदीराज्ये शान्तिवने जीवानन्दः नाम महर्षिः निवसति स्म। प्रबोधः जीवानन्दस्य प्रियशिष्यः। गुरुमुखात् आगतम् एकैकं वचनम् अपि अमूल्यम् इति चिन्तयति स्म सः। गुरुः जीवानन्दः अपि प्रबोधं विशेषप्रीत्या पाठयति स्म। अतः प्रबोधः वेदान्तशास्त्रे असदृशं पाण्डित्यं प्राप्तवान् आसीत्।

जीवानन्दः सम्भाषणसन्दर्भे तदा तदा काशीम् उल्लिखति। विश्वेश्वरदर्शनेन विशेषपुण्यफलं लप्स्यते इति सः प्रतिपादयति स्म। अतः 'काशीविश्वेश्वरस्य दर्शनं करणीयम्' इति इच्छा प्रबोधस्य मनसि तीव्रतरा अभवत्।

शिष्यस्य एतं मनोभिलाषं जीवानन्दः ज्ञातवान्। सः एकदा प्रबोधम् आहूय काशीगनार्थम् अनुमतिं दत्त्वा आशीर्भिः तम् अनुगृह्य प्रेषितवान्।

प्रबोधः तद्दिने एव काशीं प्रति प्रस्थितः। केषाञ्चित् दिनानां प्रयाणानन्तरं मध्येमार्गं तस्य पादरक्षा एका छिन्ना अभवत्। तत्सन्दर्भे समीपे एव तेन कश्चन चर्मकारः दृष्टः। 'देवदयया एव एषः समये प्राप्तः' इति चिन्तयन् प्रबोधः चर्मकारसमीपं गतवान्। समीकरणार्थं पादरक्षां तस्य पुरतः स्थापितवान् च।

तस्य चर्मकारस्य नाम कालिदासः इति। सः प्रबोधस्य पादरक्षां समीकुर्वन् पृष्ठवान् - "श्रीमन्! सुदूरतः आगतवान् इति भाति। कुत्र गन्तुम् उद्युक्तः भवान्?" इति।

"अहं कौमुदीराज्यतः आगच्छन् अस्मि। काशीविश्वेश्वरस्य दर्शनार्थं प्रस्थितवान् अस्मि च" इति उक्तवान् प्रबोधः।

एतत् वचनं श्रुतवतः कालिदासस्य नेत्रद्वयम् आश्चर्येण प्रकाशमानम् अभवत्।

"अहो! भवान् काशीविश्वेश्वरस्य



दर्शनार्थं प्रस्थितः! पुण्यस्य विषयः एषः। सामान्याः एतादृशं भाग्यं न प्राप्नुयुः एव। महाभाग्यशाली भवान्" इति सन्तोषेण उक्तवान् सः।

समीकृतां पादरक्षां धृत्वा प्रबोधः एकं रजतनाणकं चर्मकाराय दत्तवान्। किन्तु सः चर्मकारः तत् अस्वीकुर्वन् उक्तवान् - "भोः, मम नाम कालिदासः। विश्वेश्वरदर्शनानन्तरं मम नाम्नि एतत् रजतनाणकं समर्पणभाण्डे स्थापयतु" इति।

प्रबोधः एतत् अङ्गीकृतवान्। तत् रजकनाणकं उत्तरीयस्य दशायां दृढं बद्ध्वा ततः अग्रे गतवान्।

एवं गमनसमये मध्ये अरण्यम् आगतम्। तदा अग्निशिखः नाम महाचोरः अश्वम् आरुह्य आगत्य प्रबोधस्य पुरतः स्थितवान्।

सः प्रबोधं तीक्ष्णदृष्ट्या पश्यन् क्रोधेन हुङ्कारं कुर्वन् - "अये! तिष्ठतु तावत्। विना विरोधं भवतः समीपे स्थितानि अमूल्यवस्तूनि मम हस्ते अर्पयतु। अन्यथा प्राणैः वञ्चितः भवेत् भवान्। अहं न सामान्यः इति स्मरतु" इति गर्जितवान्।

भीतः प्रबोधः मार्गव्ययार्थं स्थापितानि शतं रजतनाणकानि अपि चोराय दत्तवान्। तत्समये उत्तरीयस्य दशायां बद्धस्य नाणकस्य उपरि चोरस्य दृष्टिः पतिता। 'तत्र किमपि अमूल्यं वस्तु स्यात् एव' इति चिन्तितवान् सः।

"वस्त्रस्य अन्ते किं तत् बद्धम् अस्ति? सुवर्णं वा?" इति गर्जनपूर्वकं पृष्टवान् चोरः अग्निशिखः।

प्रबोधः वस्त्रबन्धनं शिथिलीकृत्य रजतनाणकं प्रदर्शयन् "भोः! कृपया एतत् अपि न स्वीकरोतु। यतः एतत् न मदीयम्। विश्वेश्वरमन्दिरे समर्पणभाण्डे एतत् स्थापयतु इति उक्त्वा मार्गे कश्चन चर्मकारः एतत् दत्तवान्। अतः एव एतत् पृथक् बद्ध्वा स्थापितवान्" इति उक्तवान्।

तदा अग्निशिखः चिन्तने पतितः "पादरक्षासमीकरणेन जीवन् सामान्यः कर्मकरः विश्वेश्वराय रजतनाणकं समर्पयति। सर्वसमर्थः अहं किमेतत् आचरन् अस्मि!" इति।

अतः सः प्रबोधतः वशीकृतानि शतं रजतनाणकानि अपि प्रबोधस्य हस्ते अर्पयन्

- "मम नाम अग्निशिखः। मम नाम्नि एतत् धनं विश्वेश्वराय समर्पणभाण्डे स्थापयत्" इति उक्तवान्। स्वकीयं मार्गम् अनुसृतवान् च।

"एतत् धनं वस्तुतः मम एव। किन्तु एषः अग्निशिखः मत्तः वशीकृत्य पुनः मम हस्ते अर्पितवान्। अतः एतस्य धनस्य उपरि मम अधिकारः नष्टः" इति चिन्तितवान् प्रबोधः।

पुनः एकमासं यावत् प्रबोधः प्रवासं कृतवान्। तत्सन्दर्भे सः एकं घोरारण्यं प्रविष्टवान्। तस्मिन् अरण्ये रुधिरकर्णो नाम राक्षसः निवसति स्म। सः प्रबोधं दृष्ट्वा अट्टहासं कुर्वन् सन्तोषेण करताडनं कुर्वन् च एतं गृहीतवान्।



प्रबोधः भीत्या कम्पमानः - "अयि भोः! राक्षसोत्तम! क्षणं तिष्ठतु। अहं काशी-विश्वेश्वरस्य दर्शनार्थं प्रस्थितः। तत् एकम् एव कार्यं मम यदि स्यात् तर्हि निश्चयेन भवतः आहारः भवेयम्। किन्तु परिस्थितिः तथा नास्ति। मार्गे कालिदासः नाम कश्चन चर्मकारः विश्वेश्वराय समर्पयितुम् एकं रजतनाणकं दत्तवान् अस्ति। तथैव अग्निशिखः नाम चोरः मत्तः धनं वशीकृत्य विश्वेश्वराय समर्पयितुं तत् धनं मम हस्ते एव दत्तवान्। यदि इदानीम् अहं भवतः आहारः भवेयं तर्हि तयोः कार्यम् अकृतं तिष्ठति। तेन अहं पापेन लिप्तः भविष्यामि। भवान् अपि पापभाक् भविष्यति। अतः इदानीं गन्तुम् अनुमतिं ददातु। प्रत्यागमनसमये निश्चयेन भवतः आहारः भविष्यामि। कर्तव्यच्युतः अहं यथा न भवेयं तथा कृपया अनुगृह्णातु" इति प्रार्थितवान्।

ब्रह्मराक्षसः रुधिरकर्णः प्रबोधस्य वचने विश्वसितवान्। अतः अग्रे गन्तुम् अनुमतिं दत्तवान् च।

अनन्तरं प्रबोधं निर्विघ्नं काशीं प्राप्तवान्। गङ्गानद्यां स्नात्वा विश्वेश्वरस्य दर्शनं प्राप्य भक्तिपूर्वकं प्रदक्षिणनमस्कारं कृतवान्। कालिदासस्य अग्निशिखस्य च नामस्मरणपूर्वकं ताभ्यां दत्तानि रजतनाणकानि समर्पणभाण्डे श्रद्धया समर्पितवान् च।

पुनः अपि द्वित्राणि दिनानि उषित्वा प्रबोधः काशीनगरं समग्रं दृष्टवान्। प्रतिप्रयाणं कुर्वन् अरण्यं प्रविश्य ब्रह्मराक्षसस्य आहारः भवितुं सिद्धः अभवत्।

तत्सन्दर्भे कश्चन व्याधः तस्य समीपम् आगतवान्। 'यस्मिन् अरण्ये ब्रह्मराक्षसः निवसति तत्र एषः निर्भीकतया सञ्चरति किल!' इति आश्चर्यम् अनुभूतवान् प्रबोधः।

सः व्याधः प्रबोधं दृष्ट्वा सन्तोषेण भक्त्या च नमस्कृत्य - "महानुभाव! अहम् एव रुधिरकर्णः नाम ब्रह्मराक्षसः। भवन्तम् अभक्षयन् काशीं गन्तुम् अनुमतिं यत् दत्तवान् तेन मया पुण्यं सम्पादितम्। तत्फलतः सर्वश्रेष्ठं मानवजन्म प्राप्तवान् अस्मि। भवतः सम्पर्केण अहं धन्यः जातः" इति उक्तवान्।

प्रबोधः रुधिरकर्णम् आशिषा अनुगृह्य अग्रे गतवान्। मार्गे केचन अटविकाः समूहरूपेण स्थिताः तेन दृष्टाः। ते विविध-वाद्यानि वादयन्तः सन्तोषकूटम् आचरन्तः आसन्। प्रबोधः तेषां समीपं गतवान्। तस्य समूहस्य मध्ये कश्चित् वेणुनिर्मिते, विविधपुष्पैः अलङ्कृते उन्नतासने उपविष्ट-वान् आसीत्। तस्य शिरसि पुष्पैः तदितर-साधनैः च निर्मितः किरीटः विराजते स्म।

सः प्रबोधं दृष्ट्वा झटिति आसनात् उत्थाय नमस्कृत्य विनयेन उक्तवान् - "श्रीमन्! अहम् एव अग्निशिखः! एते अटविकाः स्वसम्प्रदायानुगुणं महाराजस्य चयनार्थं एकं शुकम् उड्डायितवन्तः। सः शुकः आगत्य मम शिरसि उपविष्टवान्। अतः एते इदानीं माम् अटविकसिंहासने उपवेशितवन्तः। एतत्सर्वं काशीविश्व-नाथस्य अनुग्रहेण एव सम्पन्नम्। भवत्कारणतः अहं पुण्यभाक् सञ्जातः। महापुण्यशाली भवान्" इति।



प्रबोधः एकदिनं यावत् अग्निशिखस्य अतिथित्वेन तत्र स्थित्वा सर्वेषाम् अनुमतिं स्वीकृत्य ततः निर्गतवान्। ततः प्रस्थाय चर्मकारस्य ग्रामं प्राप्तवान्।

पूर्वं चर्मकारः यत्र उपविशति स्म तत्र इदानीं कश्चन पादरक्षापणः दृश्यते स्म। उत्तमवेषभूषैः अलङ्कृतः कश्चित् यजमानत्वेन तत्र उपविष्टः आसीत्।

प्रबोधः तस्य समीपं गत्वा - "भोः! पूर्वम् अत्र कालिदासः नाम चर्मकारः उपविशति स्म। तस्य परिचयः अस्ति वा भवतः? सः कुत्र निवसति?" इति पृष्टवान्।

सः महाजनः तत्क्षणे उत्थाय प्रबोधं साष्टाङ्गं नमस्कृत्य - "श्रीमन्! कालिदासः अहम् एव! केभ्यश्चित् दिनेभ्यः पूर्वं महाराजः एतेन मार्गेण गच्छन् मया निर्मितानां पादरक्षाणां सौन्दर्येण आकृष्टः अभवत्। एकां पादरक्षां सः क्रीतवान् च। तद्दिनतः मम सौभाग्यम्! राज्ये प्रमुखाः धनिकाः, अधिकारिणः च मया निर्मिताः पादरक्षाः एव क्रीणन्ति। वस्तुतः एतत्सर्वं मम प्रयत्नेन न सिद्धम्। काशीविश्वनाथस्य अनुग्रहभाग्येन अहं धन्यः जातः" इति उक्तवान्।

'आत्मनः कारणतः त्रयः अतिशीघ्रम् एव पुण्यफलं प्राप्तवन्तः। तेषां जीवने एव महत्परिवर्तनं जातम्।' इति प्रबोधः अतीव सन्तुष्टः।

"एते त्रयः तु मम कारणतः एव भाग्यवन्तः जाताः, सत्यम्। किन्तु मम परिस्थितिः? काशीविश्वनाथम् अहं स्वयं दृष्टवान्। किन्तु मया तु पुण्यफलं किमपि न





प्राप्तम् एव। मया तु यथापूर्वं शान्तिवनं गत्वा श्रमपूर्वकं गुरुशुश्रूषा करणीया एव" इति खेदम् अनुभूतवान् प्रबोधः।

एवं बहुधा चिन्तयन् प्रबोधः शान्तिवनं प्राप्तवान्। गुरुं जीवानन्दं प्रवृत्तं सर्वं निवेद्य स्वसन्देहम् अपि उपस्थापितवान्।

जीवानन्दः तस्य वचनानि सावधानतया श्रुत्वा पृष्टवान् - "प्रबोध! भवान् मार्गव्ययार्थं किञ्चित् धनम् इतः नीतवान्। मार्गे तत्सर्वं चोरः अपहृतवान्। एवं तर्हि अनन्तरदिनेषु आहारार्थं भवान् किं कृतवान्?" इति।

"गुरुदेव! काशीप्राप्तिपर्यन्तं अग्निशिखेन दत्ते धने किञ्चित् अपि न व्ययितवान्। अरण्यमार्गे यत् कन्दमूलफलादिकं प्राप्तं तेन एव मम बुभुक्षा निवारिता भवति स्म। ग्रामप्रदेशे तु ग्रामीणाः प्रीत्या आहूय सत्कारं कुर्वन्ति स्म। अतः तावत्पर्यन्तं समस्या एव न आसीत्। काशीप्राप्तेः अनन्तरम् एव किञ्चित् धनं व्ययितम् अभवत्" इति उक्तवान् प्रबोधः।

"किमर्थं तथा करणीयम् आपतितम्?" इति पृष्टवान् जीवानन्दः।

"नगरे केचन तीर्थयात्रिकाः मया मिलितवन्तः। ते पूर्वं यत्र स्थितं तां धर्मशालां परित्यज्य अन्य- धर्मशालां गच्छन्तः आसन्। यदा अहं कारणं पृष्टवान् तदा ते उक्तवन्तः - 'अत्र वसत्यादिव्यवस्था सम्यक् नास्ति। समीपे एव अन्या धर्मशाला अस्ति। तत्र किञ्चित् धनं दत्तं चेत् उत्तमसौलभ्यम् उपकल्पयन्ति' इति। माम् अपि आग्रहेण ते आहूतवन्तः। अतः तैः सह अहम् अपि तत्र गतवान्। तत्र अनिवार्यतया यजमानाय धनं दातव्यम् एव आपतितम्। एवम् अग्निशिखेन दत्ते धने कञ्चन भागम् अहं व्ययीकृतवान्" इति विवरणं दत्तवान् प्रबोधः।

जीवानन्दः मन्दहासं प्रकटसन् - "प्रबोध! अत्र एव भवता दोषः आचरितः। अग्निशिखः चोरः। चौर्यम् एव तस्य वृत्तिः। स्ववृत्त्यनुगुणं सः भवदीयं धनम् अपहृतवान्। तदा तस्य धनस्य उपरि स्थितः भवतः अधिकारः नष्टः। तदेव धनं सः भवतः हस्ते दत्तवान्। यत् धनं भवदीय न तत् भवान् व्ययीकृतवान्। एवं कृत्वा अपि अन्यैः यत् पुण्यं प्राप्तं तादृशं मया न प्राप्तम् इति खेदम्

अनुभवति किल?" इति उक्तवान्।

"धनव्ययविषये मया दोषः कृतः स्यात्। आपद्धर्मः आसीत् सः। किन्तु पुण्यफलेच्छा दोषाय कथं भवेत्?" इति विनयेन एव पृष्टवान् प्रबोधः।

जीवानन्दः क्षणकालं मौनं स्थित्वा उक्तवान् - "वृक्षस्य अधः उपविश्य वृष्टिं शैत्यम् आतपं च अविगणय्य कार्यं कुर्वन् कालिदासः परमदरिद्रः। सः तत्क्षणे पुण्यफलं प्राप्तवान्। अग्निशिखः तु मार्गलुण्टकः क्रूरकर्मी। ये स्वत्वं दातुं निराकुर्वन्ति तान् मारयितुम् अपि सिद्धः सः। सः अपि अचिरात् एव पुण्यफलं प्राप्तवान्। ब्रह्मराक्षसः रुधिरकर्णः तु जन्मना एव क्रूरः। बुभुक्षानिवारणम् एव तस्य लक्ष्यम्। अतः पुरतः आगतं जनं सः खादति एव। एतैः त्रिभिः पुण्यफलं शीघ्रं यत् प्राप्तं तेन लोकस्य अपि उपकारः सिद्धः। चोरस्य ब्रह्राक्षसस्य च पीडातः बहवः रक्षिताः अभतन्।....." इति।

"तन्नाम अहं लोकपीडकः न अस्मि इति कारणतः मया पुण्यफलं न प्राप्तम् इति वा? तत् कथं भवेत्। विशेषश्रमः तु मया एव अनुष्ठितः। श्रमानुगुणं फलस्य निरीक्षा किम् अनुचिता वा?" इति पुनः पृष्टवान् प्रबोधः।

"तथा न। भवान् अन्यथा न चिन्तयतु। दरिद्रेण, चोरेण, ब्रह्मराक्षसेन च तत्क्षणे यथा पुण्यफलं प्राप्तं तथा। तत्क्षणे भवता अपि पुण्यफलं प्राप्तव्यं नास्ति। भवतः न दारिद्र्यम्। न वा भवान् लोककण्टकः, जनमारकः वा। इतोऽपि भवान् विद्यार्थी। विश्वेश्वरदर्शनं निष्फलं तु न। तस्य पुण्यफलं कालान्तरे भवान् श्चियेन अनुभविष्यति" इति बोधितवानं जीवानन्दः।

कालान्तरे जीवानन्दस्य वचनं फलितम् अभवत्। प्रबोधः जीवानन्दतः सर्वाणि शास्त्राणि, वेदान्ततत्त्वं च सम्यक् अधीत्य कौमुदीराज्ये अद्वितीयः पण्डितः इति कीर्तिं सम्पादितवान्।

प्रबोधस्य पाण्डित्यं ज्ञात्वा सन्तुष्टः महाराजः तं राजगुरुपदव्यां नियोज्य योग्यैः पुरस्कारै सत्कृतवान्।



# आधिक्यम्

'स्वग्रामस्य रामदेवालयस्य पुनरुज्जीवनं करणीयम्' इति गोपालपुरस्य ग्रामीणाः कदाचित् चिन्तितवन्तः। तदर्थं धनं सङ्ग्रहणीयम् आसीत्।

एतत् ज्ञात्वा ग्रामज्येष्ठः गोविन्दार्यः उक्तवान् - "वयं काञ्चित् सङ्गीतगोष्ठीम् आयोजयाम। श्रोतारः ये आगच्छन्ति तेभ्यः धनं सङ्गृहणीम" इति।

तस्मिन् ग्रामे चक्रपाणिः इति सङ्गीतज्ञः सोमदत्तः नाम वैणिकः च आसीत्। "एतयोः सङ्गीतगोष्ठी आयोजनीया। गौरवधनरूपेण एकैकस्मै अपि एकोत्तरशतं रूप्यकाणि दातव्यानि" इति सार्वजनिकसभायां निर्णयः जातः। चक्रपाणिः एतं प्रस्तावम् अङ्गीकृतवान्।

सोमदत्तः तु - "तत् कथम्? बालकः चक्रपाणिः क्व? अनुभवी वैणिकः अहं क्व? उभयोः समानगौरवधनं कथं वा युज्येत? पाण्डित्ये मम एव आधिक्यम्। एतत्सूचनार्थं वा तस्मै यावत् दीयते ततोऽपि एकरूप्यकम् अधिकं मह्यं दातव्यम् एव" इति उक्तवान्। ग्रामीणाः एतत् अङ्गीकृतवन्तः।

सप्ताहानन्तरं सङ्गीतगोष्ठी प्रवृत्ता। कार्यक्रमस्य अनन्तरं ग्रामप्रमुखः गोविन्दार्यः उत्थाय उक्तवान् - "महाजनाः! चक्रपाणये यावत् दीयते ततोऽपि एकरूप्यकम् अधिकं दातव्यम् इति सोमदत्तेन प्रार्थितम् आसीत्। 'देवकार्यम् इत्यतः मह्यं गौरवधनं किमपि न अपेक्षितम्' इति चक्रपाणिना सूचितम् अस्ति। अतः सोमदत्ताय एकं रुप्यकम् इदानीं गौरवधनरूपेण दीयते" इति।

सोमदत्तः लज्जया तत् धनं स्वीकृतवान्। मुखम् अवनमय्य मौनं स्वगृहं गतवान् च।



# ज्वालाद्वीपः



नर्मदानद्याः तीरे स्थितः धवलगिरिः पूर्वं बहु प्रसिद्धः आसीत्। एतत् राज्यं तारकेश्वरः नाम राजा पालयति स्म। तारकेश्वरस्य उभौ पुत्रौ।

ज्येष्ठस्य पुत्रस्य नाम शूरसेनः इति। एषः पञ्चविंशतिवर्षीयः तरुणः। कनिष्ठस्य पुत्रस्य नाम चित्रसेनः इति। एषः अष्टादश-वर्षीयः। उभौ अपि उत्साहिनौ। क्रीडासु मृगयाविहारे च तयोः विशेषासक्तिः।

एकदा उभौ अपि राजकुमारौ परिवार-सहितं मृगयाविनोदार्थम् अरण्यं गतवन्तौ। अरण्ये अटन्तौ तौ हरिणानां समूहं दृष्टवन्तौ।

राजकुमारौ स्वकीयम् अश्वं प्रेरयन्तौ तदा तदा बाणप्रयोगं कुर्वन्तौ हरिणसमूहस्य पृष्ठतः धावितवन्तौ। एवम् अनुधावने तौ स्वपरिवारतः पृथक् जातौ।

एवं बहुदूरं गमनानन्तरं वृक्षाणा मध्यतः सिंहगर्जनं श्रुतम्। सामान्यगर्जनं न तत्। तत् श्रुत्वा किञ्चिदिव भीतौ राजकुमारौ धनुषि बाणं योजितवन्तौ। किन्तु तावता एव उभौ सिंहौ भीकरं गर्जन्तौ तयोः उपरि अकस्मात् आक्रमणं कृतवन्तौ। सिंहयोः आक्रमणेन राजकुमारयोः अश्वौ भीत्या परिवृत्य उन्मत्तौ इव वेगेन धावितुम् आरब्धवन्तौ।

राजकुमारयोः कनिष्ठस्य चित्रसेनस्य अश्वः यजमानेन निगृह्यमाणः अपि अग्रे अधावत्। खलीननिग्रहणेन अपि न स्थितः। वृक्षाणां मध्ये धावन्, किञ्चित्कालानन्तरं पर्वतकन्दरे अपतत्। रक्तं वमन् प्राणान् अत्यजत्।

अधः पतितः चित्रसेनः यावत् उत्थाय




आगतवान् ततः पूर्वम् एव अश्वः मृतः आसीत्।

अश्वस्य मरणं दृष्ट्वा चित्रसेनः एकवारं दीर्घं निश्वसितवान्। सः अपि इदानीं श्रान्तः अस्ति। अग्रजः कुत्रापि दृश्येत वा? इति सः परितः दृष्टिं प्रसारितवान्। समीपे कुत्रापि अग्रजः न दृष्टः। परिवारजनाः अपि न दृष्टाः। 'मार्गभ्रष्टः अहं बहुदूरम् आगतवान् अस्मि' इति आलोचितवान् चित्रसेनः।

सः प्रदेशः उन्नतैः वृक्षैः व्याप्तः, अन्धकारमयः च आसीत्। वृक्षेषु कपयः, पक्षिणः, लताः इव लम्बमानाः अजगराः, सर्पाः च तत्र तत्र दृश्यन्ते स्म। मानव-सञ्चारार्थम् अनर्हः प्रदेशः सः।

का दिक् अनुसरणीया इति न ज्ञातवान् चित्रसेनः। अनाथः इव किङ्कर्तव्यतामूढः सन् सः शून्यदृष्ट्या सर्वं पश्यति। 'परि-वारतः किं, मानवनिवासतः एव बहुदूरम् आगतवान् अस्मि। धवलगिरिः प्राप्तव्या चेत् पादाभ्यां गमनम् एव शरणम्। धवलगिरिः कियद्दूरे अस्ति इत्यपि न ज्ञायते। कः वा प्रष्टव्यः? नीरवे अरण्ये केवलं 'जीर' इति शब्दः श्रूयते, तावदेव।'

आत्मनः दुःस्थितिं पुनः पुनः स्मरन्, पश्चात्तापम् अनुभवन् चित्रसेनः ततः मन्दं गन्तुम् आरब्धवान्। 'यदि देवकृपा स्यात् तर्हि कोऽपि आश्रयः लभ्येत' इति आलोच-यन् सः अरण्ये किञ्चिद्दूरं गतवान्। तदा गुल्मैः आवृतः वृक्षैः उत्कीर्णः च कश्चन पर्वतः सम्मुखे आगतः। पर्वतस्य मूले लघुधारारूपेण काचित् नदी प्रवहति स्म।

नदीं दृष्टवतः चित्रसेनस्य पिपासा स्मरणे आगता। सः वेगेन पदानि स्थापयन् नदीसमीपं गत्वा हस्तेन जलं पिबन् पिपासां दूरीकृतवान्।

पिपासायाः निर्गमनेन तस्य शरीरे उत्साहः उत्पन्नः। बुद्धिः क्रियाशीला अभवत्। कस्यचित् वृक्षस्य अधः उपविश्य सः अग्रिमकार्यविषये शान्ततया चिन्तयितुम् आरब्धवान्।

''प्रायशः मम अग्रजः शूरसेनः अपि सिंहतः आत्मानं रक्षन् कुत्रापि गतवान् स्यात्'' इति चिन्तितवान् चित्रसेनः। यतः सिंहभीत्या पलायमानं तस्य अश्वम् अपि

एषः दृष्टवान् आसीत्।

"अग्रजः शूरसेनः अस्यां दिशि कदाचित् आगतवान् स्यात् अपि" इत्यपि आशाभावः उत्पन्नः चित्रसेनस्य मनसि। अतः सः उच्चस्वरेण "अग्रजss, शूरसेनsss" इति द्वित्रवारम् आहूतवान्।

चित्रसेनस्य ध्वनिः पर्वतकन्दरे प्रतिध्वनितः अभवत्। अत्रान्तरे नद्याः अपरपार्श्वे स्थितायाः गुहातः आगतः कश्चन शब्दः चित्रसेनेन श्रुतः - "कः तत्र? किम् एतत्? अस्मिन् घोरारण्ये मानवध्वनिः कथम् उत्पन्नः? कीदृशः भाग्यशाली अहम्! पुत्रक! कः भवान्? नदीम् अतिक्रम्य अत्र मम समीपम् आगच्छतु भोः" इति।




एतेन कण्ठध्वनिना चित्रसेनः क्षणकालं स्तब्धः। किन्तु अपरक्षणे आत्मनि धैर्यं पूरयन् सः उच्चकण्ठेन उक्तवान्- "कः भोः भवान्? राक्षसः उत नरभक्षकः किरातः? अन्यथा भवान् किमर्थं वा गुहायाः अन्तः स्थित्वा एव आह्वयेत्? बहिः आगच्छन्तु तावत्। अद्य मम खड्गस्य समीचीनः आहारः भवेत्। यदि धैर्यं स्यात् तर्हि बहिः आगत्य आत्मानं प्रदर्शयन्तु" इति।

चित्रसेनस्य वचनं यावत् समाप्तं तावता गुहातः विचित्रः हासः श्रुतः। तदनन्तरं ध्वनिः अपि श्रुतः- "वत्स! कियद्धैर्यशाली भवान्! भवादृशस्य धैर्यशालिनः एव प्रतीक्षायाम् आसम् अहम्। अहम् अपि मानवः एव। मानवभक्षकः किरातः राक्षसः वा न। कश्चन सिद्धपुरुषः अहम्। महता श्रमेण काश्चन शक्तयः सम्पादिताः। तासां दानार्थं सत्पात्रस्य प्रतीक्षायाम् अस्मि अहम्। आगच्छतु वत्स! भवते एव ताः शक्तीः ददामि। उत्थाय आगन्तुम् अहं न शक्नोमि वत्स!" इति।

चित्रसेनः क्षणमात्रेण मनसि निश्चयं कृतवान्- 'यदि गुहायां राक्षसः एव स्यात् तर्हि इतः सजीवं गमनम् असाध्यम् एव। तत्र यः कोऽपि भवतु नाम। यदि दुष्टः स्यात् तर्हि तेन सह युद्धं कुर्वन् क्षत्रियधर्मं पालयिष्यामि। यदि सिद्धः कश्चन स्यात् तर्हि मम अपायः नास्ति एव। इदानीं तत्र गमनं विना अन्यः मार्गः नास्ति। तत्र गच्छामि चेत् इतः अन्यत्र गन्तुं मार्गं वा जानीयाम्' इति।

एवं निश्चित्य चित्रसेनः एकस्मिन् हस्ते



खड्गं गृहीत्वा जागरूकतया नदीं तीर्त्वा अपरतीरं प्राप्तवान्।

पर्वतपादे बह्वयः गुहाः आसन्। अतः कः आहूतवान्, सः कुत्र स्यात्। इति न ज्ञातवान् चित्रसेनः। एकैकाम् अपि गुहां प्रविश्य पश्यन् अग्रे गतवान् सः। तदा पार्श्वस्थ-गुहातः- "भोः, अत्र आगच्छतु। चलितुम् असमर्थः सन् अत्र उपविष्टः अस्मि। अन्तः आगच्छतु" इति आह्वानं श्रुतम्।

चित्रसेनः युद्धार्थं सिद्धः इव खड्गं दृढं गृहीत्वा गुहायाः पुरतः स्थित्वा अन्तः दृष्टिं प्रसारितवान्।

गुहायां कश्चन सिद्धपुरुषः उपविष्टः अस्ति। तस्य केशाः श्मश्रूणि च पलितानि। गुहायाः मध्ये उन्नतवेदिकायाम् उपविष्टः आसीत् सः। गुहायाः उपरिभागे स्थितात् रन्ध्रात् सूर्यप्रकाशः अन्तः आगच्छति स्म। तेन गुहायां पर्याप्तमात्रेण प्रकाशः दृश्यते स्म।

गुहां प्रविष्टः चित्रसेनः तत्र उपविष्टं वृद्धं सिद्धयोगिनं दृष्ट्वा आत्मनः वचनविषये लज्जाम् अनुभूतवान्। खड्गं कोषे स्थापयन् विनयेन सिद्धयोगिनं नमस्कृत्य सः उक्तवान्- "महात्मन्! भवतः स्वरूपम् अज्ञात्वा अविवेकेन किमपि उक्तवान्। मां क्षाम्यतु भवान्" इति।

चित्रसेनस्य वचनं श्रुत्वा मन्दहासं प्रकटयन् सः सिद्धः उक्तवान्- "पुत्र! भवान् उत्तमः क्षत्रियः इव भाति। षष्टिवर्षाणां तपस्यया अहं काञ्चित् अपूर्वां शक्तिं सम्पादितवान् अस्मि। किन्तु ताम् अनुभोक्तुं मम भाग्यं नास्ति। यतः शक्तिसम्पादने एव मम आयुः अतीतम्। अद्य अष्टमी किल? रात्रौ चन्द्रोदयसमये मम मरणं भविष्यति। एतावता परिश्रमेण सम्पादितां शक्तिं कस्मैचित् दातुम् अहम् इच्छामि। मम सौभाग्येन मरणतः पूर्वम् एव विधिः भवन्तम् अत्र प्रेषितवान्। समये प्राप्तः भवान् एव सत्पात्रम्। अत्र संशयः एव नास्ति। स्वीकरोतु एतत् अपूर्वं वस्तु। अत्रैव विशिष्टा शक्तिः निहिता अस्ति" इति। अनन्तरं सः एकं कण्डोलं चित्रसेनाय दत्तवान्।

सिद्धयोगिनः हस्ततः स्वीकृतं कण्डोलं चित्रसेनः कुतूहलेन उद्घाटयितुम् उद्युक्तः।

tदा सः सिद्धः स्वदण्डसाहाय्येन तस्य प्रयत्नं निवारयन्- "पुत्र! भवता एषः कण्डोलः अत्र न उद्घाटनीयः। यस्मिन् प्रदेशो भवान् वासं कर्तुम् इच्छति तत्र एतम् उद्घाटयतु। तेन एव भवतः हितं सिध्यति। तावत्पर्यन्तं सहनया तिष्ठतु" इति।

चित्रसेनः सिद्धयोगिनः वचनं शिरश्चालनपूर्वकम् अङ्गीकृत्य- "महात्मन्! भवतः अनुग्रहार्थं कृतज्ञः अस्मि अहम्। मत्तः भवान् कामपि सेवाम् इच्छति चेत् कृपया निस्सङ्कोचं वदतु" इति उक्तवान्।

तदा सिद्धयोगी हसन् उक्तवान्- "भोः भवतः भक्त्या विनयेन च अहं सन्तुष्टः अस्मि। इतःपरं कासुचित् एव घण्टासु अहं मरणं प्राप्नोमि। अस्यां परिस्थितौ मम अन्यस्य साहाय्यस्य अपेक्षा का? अथवा भवान् एकं लघुम् उपकारं कर्तुम् अर्हति। गुहातः बहिः गतः भवान् पूर्वदिशि स्थितां महाशिलाम् अधः नोदयतु। एषः एव भवता करिष्यमाणः प्रत्युपकारः। एतावत् करोतु, पर्याप्तम्" इति।

सिद्धयोगिनं नमस्कृत्य बहिः आगतः चित्रसेनः गुहाद्वारस्य उपरि स्थितं शिलाफलकं महता बलेन आकृष्टवान्। तदा शिलापतनतः उत्पन्नः कर्णकठोरः अतिभयङ्करः महाशब्दः श्रुतः। अधः पतितया फलकाकारया महाशिलया नकेवलं गुहाद्वारं पिहितम्, अपि तु गुहायाः स्थितिः एव ज्ञातुम् अशक्या अभवत्।




चित्रसेनः तत्रैव किञ्चित्कालं मौनं स्थितवान् आसीत्। अनन्तरं मन्दं गच्छन् नदीं तीर्त्वा अरण्यं प्रविष्टवान्। पुनः नगरं प्राप्तव्यं चेत् केन मार्गेण गन्तव्यम् इति सः न जानाति। सिद्धयोगी अपि तेन न पृष्टः आसीत्। वस्तुतः सिद्धयोगी एतस्य कुलगोत्रादिकम् अपृष्ट्वा एव विश्वासं प्रदर्शितवान्। कासुचित् घण्टासु सः मरणं प्राप्स्यति च। तादृशं भगवच्चिन्तनपरं सिद्धयोगिनं कथं वा गमनमार्गं पृच्छेत् चित्रसेनः? महात्मानं तं लघुविषयं प्रष्टुं सङ्कोचः अभवत् तस्य।

अनन्योपायः चित्रसेनः वृक्षाणां मध्ये मार्गं कल्पयन् अग्रे गतवान्। बहुदूरं गमनानन्तरं सूर्यः पश्चिमदिशम् आश्रितवान्। चित्रसेनः

तीव्रं बुभुक्षाम् अनुभूतवान्।

श्रमम् अनुभवन् चित्रसेनः मन्दं गच्छन् यत्र वृक्षाः न्यूनाः तादृशं किञ्चिदुन्नतं स्थानं प्राप्तवान्। तत्र किञ्चित्कालम् उपविश्य आयासं परिहृतवान्। अत्रान्तरे स्कन्धे स्थापितः सिद्धयोगिना दत्तः कण्डोलः तस्य स्मरणे आगतः। 'अस्य कण्डोलस्य अन्तः कीदृशम् अपूर्वं वस्तु स्यात्' इति जिज्ञासा उत्पन्ना चित्रसेनस्य मनसि। 'सिद्धयोगिना उक्तं जागरूकतावचनं तावत् महत्त्वपूर्णं न' इति भावना। आगता तस्य मनसि।

सः कण्डोलं स्कन्धतः अवतार्य कुतूहलेन तस्य आवरणम् अपसारितवान्। तत्क्षणे काचित् प्रखरविद्युत्प्रभा प्रस्फुरिता। भीतः चित्रसेनः नेत्रे निमील्य स्थितवान्। क्षणद्वयानन्तरं यदा सः नेत्रे उद्घाटितवान् तदा तस्य पुरतः किञ्चन भवनं स्थितं दृष्टम्। आकाशचुम्बि तत् भवनं अकस्मात् तत् उद्भूतम् आसीत्।

आत्मनः पुरतः स्थितम् एतत् नूतनं भवनम् अकस्मात् दृष्ट्वा चित्रसेनः स्तब्धः। तावता सः सिद्धयोगिनः जागरूकतावचनं स्मृतवान्।

"हन्त! कीदृशी मूर्खता आचरिता मया? अस्मिन् घोरारण्ये स्थितेन एतेन दिव्यभवनेन मम किं वा प्रयोजनम्? एतादृशं दिव्यभवनं यदि मम नगरे धवलगिरौ स्यात् तर्हि कियत् समीचीनम् अभविष्यत्! अविवेकी अहम् अजागरूकतया सिद्धयोगिना दत्तां शक्तिं व्यर्थीकृतवान्" इति बहुधा दुःखम् अनुभूत-



वान् चित्रसेनः।

तस्मिन् समये चित्रसेनः अपरम् आश्चर्यं दृष्टवान्। अरण्यमध्यतः विचित्रः कर्णकठोरः ध्वनिः कोलाहलः च श्रुतः। वृक्षेषु कम्पनम् उत्पन्नम्। 'एतत् कथम् एवं सम्पन्नम्!' इति अजानन् चित्रसेनः भयेन आश्चर्येण च परितः पश्यन् आसीत्। तदा मार्गे आगतान् वृक्षान् मशकान् इव हस्तेन सुलभतया निवारयन् कश्चन राक्षसः तस्य समीपम् आगतवान्। एवम् आगतं राक्षसं दृष्टवतः चित्रसेनस्य सर्वाङ्गेषु कम्पनम् उत्पन्नम्। झटिति सः खड्गं स्वीकृत्य युद्धार्थं सिद्धः अभवत्।

राक्षसः विकटाट्टहासं कुर्वन् समीपम् आगत्य "अये मानवशिशुक! कियत् धैर्यं भवतः? मानवाः माम् उग्राक्षं दृष्ट्वा प्राणान् त्यजन्ति। यथा भवान् खड्गं गृहीत्वा मां सम्मुखीकृतवान् तथा इतःपूर्वं कोऽपि न स्थितवान्" इति विकृतध्वनिना उक्तवान्।

अनन्तरं महाभवनं तीक्ष्णदृष्ट्या पश्यन्- "एतद्गृहनिर्माणचेष्टां भवान् कृतवान् वा?" इति पृष्टवान् सः राक्षसः।

"आम्" इति सधैर्यम् एव उक्तवान् चित्रसेनः। एतत् प्रत्युत्तरं श्रुत्वा राक्षसः "अहो हो हो!" इति अट्टहासं कुर्वन् कोपेन पृष्टवान्- "एतत् महारण्यं किं भवतः तातपादाः जलसेचनेन वर्धितवन्तः? जागरूकः भवतु। एतत् उग्राक्षस्य अरण्यम्। मम अनुमतिं विना भवान् एतत् भवनं कथं निर्मितवान्? भवन्तं भवतः भवनं च समुद्रे



क्षिपामि इदानीम्। मां किम् इति चिन्तयति भवान्?" इति। अनन्तरं चित्रसेनं ग्रहीतुम् अग्रे आगतवान्।

चित्रसेनः राक्षसतः आत्मानं रक्षन्- "अये उग्राक्ष! अविवेकितया किमपि न करोतु। जागरूको भवतु। मया अत्र गृहं निर्मितं चेत् भवतः का हानिः? अथवा एतत् भवनं भवान् इच्छति चेत् अहं दातुं सिद्धः। राक्षसस्य अपि काऽपि नीतिः भवति एव। भवान् मया इतःपूर्वं मिलितवान् स्यात् तर्हि अहं पृच्छेयम्। किन्तु भवान् कदा मिलितवान्?" इति पृष्टवान्।

"किमपि व्याजं न वदतु भवान्। अरण्ये मां धिक्कृत्य भवनं यत् निर्मितवान् तत् अपराधाय एव। यदि भवान् सजीवं गन्तुम् इच्छति तर्हि मया यत् उच्यते तत् अङ्गीकरणीयं भवता" इति उक्तवान् उग्राक्षः।

"किं तत्?" इति पृष्टवान् चित्रसेनः।

"भवान् अस्मिन् भवने सुखं निवसतु नाम। मम तत्र न आक्षेपः। उत्पत्स्यमानेषु पुत्रेषु ज्येष्ठं पुत्रं मह्यम् अर्पयतु, यदा सः अष्टादशवर्षीयः भविष्यति। किम् एतत् अनुमतं भवतः?" इति पृष्टवान् उग्राक्षः।

'का इयं विचित्रा इच्छा एतस्य राक्षसस्य? अहम् इदानीम् अपि अविवाहितः। एतस्य प्रार्थनाम् अङ्गीकरोमि चेत् मम का हानिः भवेत्? प्राणरक्षणं तु प्रथमं कर्तव्यम्" इति चिन्तितवान् चित्रसेनः।

अतः सः उक्तवान् - "उग्राक्ष! भवतः वचनम् अङ्गीकरोमि। उत्पत्स्यमानः मम ज्येष्ठः पुत्रः यदा षोडशवर्षीयः भविष्यति तदा तं नेतुम् अर्हति भवान्" इति।

एतत् श्रुत्वा महता सन्तोषेण राक्षसः उक्तवान् - "एवं तर्हि इतः सजीवं गन्तुम् अनुमतिं ददामि अहम्। भवता तु दत्तं वचनं न विस्मर्तव्यम्। वचनपालनम् अवश्यं करणीयम्" इति। अनन्तरं ततः गतवान् च।

(- अनुवर्तते)






# लोपः कस्य?

''कथाश्रवणविषये एषः राजा बालचापल्यं प्रदर्शयति किल!'' इति वेतालः आश्चर्यम् अनुभवन् आसीत्। अत्रान्तरे पुनः तत्र आगतः राजा त्रिविक्रमः वृक्षम् आरुह्य वेतालसहितं शवम् अधः अवतार्य, स्वीयभुजे संस्थाप्य श्मशानं प्रति मौनं प्रस्थितवान्। तदा शवस्य मुखद्वारा वेतालः वक्तुम् आरब्धवान् ''भो! राजन्, एतस्मिन् श्मशाने, भयङ्करे मध्यरात्रसमये, भवता एतावान् कठिनश्रमः अनुभूयते खलु। एतत्सर्वं भवान् स्वेच्छया न करोति इति मम अभिप्रायः। एतत् कार्यं भवता कारयितुं अन्यः कश्चित् प्रेरणां प्रोत्साहं च ददाति इति संशयः जायते। एवंरीत्या परबुद्धिम् आधारीकृत्य क्रियमाणं कार्यं कदाचित् प्राणहारकं भवति इति भवान् न जानाति वा? विवेकवन्तः अपि ग्रहचारवशतः बुद्धिहीनाः भूत्वा जनानाम् उपहासस्य लक्ष्यभूताः भवन्ति। एतस्य उदाहरणरूपां कथाम् एकां वदामि, शृणोतु। एतेन मार्गायासः न्यूनी-

वेतालकथा

S—F-4



भवति, तथा भवतः आलोचनासरणिः अपि समीकृता भवेत्" इति उक्त्वा कथाम् आरब्धवान्-

पूर्वं कदाचित् सुवर्णदेशं शशाङ्क नामकः राजा पालयति स्म। तस्य राज्ञी सुनन्दा अत्यन्तरूपवती आसीत्। महाराजस्य तु तस्याः उपरि अपरिमिता प्रीतिः। सा यत् यत् इच्छति, तत् सर्वं अविलम्बेन कारयति सः। तया अपेक्षितं वस्तु बहुमूल्यं वा भवेत्, अतिप्रयाससाध्यं वा स्यात्। भगीरथप्रयत्नं कृत्वा आनाय्य सः तां सन्तोषयति स्म।

विविधवस्त्रालङ्कारेषु, वेषभूषणादिषु च सुनन्दायाः विलक्षणा आसक्तिः आसीत्। अतः शशाङ्कः तस्या अपेक्षाः पूरयितुं देशविदेशेभ्यः कुविन्दान् सुवर्णकारान् च आनाय्य स्वीये आस्थाने स्थापितवान् आसीत्। तेषु चन्दननामकः कुविन्दः, शोणकनामकः स्वर्णकारः च असमान-प्रतिभाशालिनौ आस्ताम्। तयोः कीर्तिः न केवलं सुवर्णदेशे, अपि तु सुवर्णदेशं परितः स्थितेषु अनेकराज्येषु अपि प्रसृता आसीत्। तयोः पुरतः अत्यन्तकुशलिनः अपि पराजयं स्वीकुर्वन्ति स्म।

राजा शशाङ्कः प्रतिवर्षं स्वीयराज्ञ्याः जन्मदिनोत्सवं सवैभवं समाचरति स्म। तस्मिन् सन्दर्भे राज्ञ्याः अपेक्षानुसारेण वस्त्राणि आभरणानि च चन्दनः शोणकः च विशेषपरिश्रमेण सज्जीकुरुतः स्म।

एकस्मिन् वर्षे यादृशानि वस्त्राणि आभरणानि च निर्मीयन्ते तद्भिन्नरीत्या एव अपरास्मिन् वर्षे निर्मीयते स्म ताभ्याम्। तथा भिन्नभिन्नरीतीनाम् आविष्कारं कर्तुं तौ समर्थौ आस्ताम्। तयोः कौशलम् आश्चर्य-जनकं जनप्रियं च आसीत्।

शशाङ्कमहाराजस्य सारङ्गनामकः आप्तस्नेहितः आसीत्। महाराजः राज्य-शासनसम्बन्धि-विषयेषु, वा कुटुम्ब-सम्बन्धि-विषयेषु वा यान् यान् निर्णयान् स्वीकरोति, तान् सर्वान् प्रप्रथमं सारङ्गं वदति स्म।

किन्तु सारङ्गः यदाकदाचित् अपि मुखम् उद्घाट्य किमपि न वदति स्म। राजा यत् यत् वदति, तत्सर्वं शिरश्चालनपूर्वकं केवलं शृणोति, तूष्णीं तिष्ठति च। तेन राजा अपि सन्तृप्तः भवति। एतत् दृष्ट्वा मकरन्द-नामकस्य सचिवस्य आश्चर्यं कुतूहलं च जातम्।

एकदा मन्त्री मकरन्दः शशाङ्कस्य समीपं गत्वा "भोः महाराज, भवतः सचिवः अहम् अस्मि। किन्तु मां त्यक्त्वा, प्रधान-विषयाः भवता सारङ्गस्य पुरतः एव प्रप्रथमं प्रस्तूयन्ते। तेन तु यदा कदा अपि या कापि सूचना दीयमाना नैव दृष्टा। तथापि भवान् केन उद्देशेन तं तथा वदति इति ज्ञातुम् अहम् असमर्थः अस्मि। केवलं कुतूहलवशात् एवं पृच्छामि। औद्धत्यम् आचरितं चेत् क्षन्तव्यः अहम्" इति उक्तवान्।

तदा शशाङ्कः "सारङ्गस्य मनः कीदृशम् अस्ति इति अहं सम्यक् जानामि। यदा आवश्यकता भवति, तदा एव सः मुखम् उद्घाटयति। अतः 'वाग्द्वारा एव तस्य अभिप्रायः श्रोतव्यः' इति आवश्यकता एव नास्ति। तस्य नेत्रयोः मुखभावस्य च दर्शनेन एव तस्य अभिप्रायः ज्ञातः भवति" इति उक्तवान्।

किञ्चित्कालानन्तरं राज्ञ्याः जन्मदिनं सन्निहितम्। चन्दनः शोणकः च यथापूर्वं राज्ञ्याः कृते वस्त्राणि आभरणानि च निर्माय प्रेषितवन्तौ। किन्तु राज्ञी तानि समीचीनानि न सन्ति इति उक्त्वा तिरस्कृतवती।

एतं विषयं ज्ञात्वा महाराजस्य महदाश्चर्यम् अभवत्। सः चन्दनं शोणकं च आनाय्य, महाराज्ञी यथा तृप्तिं प्राप्नुयात्, तथा नूतननूतनप्रकारान् चिन्तयित्वा वस्त्राणि आभरणानि च निर्माय आनेतव्यानि इति आज्ञापितवान्। अपेक्षितं धनं दातुं कोशाधिकारिणं सूचितवान्।

अनन्तरं ताभ्यां बहुधा प्रयत्नाः कृताः। किन्तु ताभ्यां निर्मितैः वस्त्रैः आभरणैः च





राज्ञ्याः तृप्तिः न अभवत्। तयोः सर्वे प्रयत्नाः विफलाः जाताः।

अन्ते महाराजः क्रुद्धः भूत्वा तौ दृष्ट्वा "भवन्तौ वृद्धौ जातौ। तेन भवतोः प्रतिभा अपि कुण्ठिता इति मन्ये। अतः इतःपरं अत्र भवतोः आवश्यकता नास्ति। भवन्तौ द्वौ अपि मम आस्थानं परित्यज्य निर्गच्छताम्" इति आज्ञां दत्तवान्।

एतं वृत्तान्तं राजप्रासादान्तर्गताः सर्वे ज्ञातवन्तः। सारङ्गः एतद्वार्ताश्रवण-समनन्तरम् एव शशाङ्कस्य समीपम् आगत्य "भो! महाराज, चन्दनशोणकयोः विषये भवता कृताम् आज्ञां ज्ञातवान्। तयोः वयसः प्रस्तावः न उचितः इति प्रतीयते। बहुवर्षेभ्यः भवान् तयोः नैपुण्यं पश्यन् अस्ति। इदानीं तस्मिन् विषये सन्देहप्रकटनं तु अर्थविहीनम् एव। ताभ्यां निर्मितानि वस्त्राणि, आभरणानि च समीचीनानि न सन्ति इति महाराज्ञ्या कृतः तिरस्कारः अपि अर्थहीनः। दोषः कुत्रापि अन्यत्र स्यात् इति भाति। सः विचारः इदानीं चिन्तनीयः। आस्थानतः तयोः निष्कासनं नाम देशतः बहिष्कारः एव भवति। अतः एतत्सर्वम् अनुचितम् इति मम अभिप्रायः, महाराज" इति उक्तवान्।

महाराजः सारङ्गस्य वचनानि मौनं श्रुत्वा अन्तःपुरं गत्वा, सारङ्गेण उक्तं सर्वं राज्ञीं कथितवान्।

महाराजस्य वचनं श्रुत्वा राज्ञी सुनन्दा किञ्चित्कालं यावत् पर्यालोच्य, पतिं "भवतः आप्तस्नेहितस्य सारङ्गस्य कारणतः मम ज्ञानोदयः अभवत्। चन्दन-शोणकयोः आस्थानबहिष्कारः मास्तु। सभायां तयोः सवैभवं सत्कारं करोतु। एषा मम अपेक्षा" इति उक्तवती।

राज्ञ्याः वचनं श्रुत्वा शशाङ्कराजः दिङ्मूढः अभवत्। किन्तु तस्याः अपेक्षा-पूरणम् अनिवार्यम्। अतः तं विचारं सचिवं कथयित्वा, चन्दनशोणकौ उचितरीत्या सम्मानयितुम् आवश्यकव्यवस्थां कर्तुम् आज्ञापितवान्।

महाराजस्य आज्ञां श्रुत्वा मन्त्री अपि आश्चर्यं प्राप्तवान्। प्रथमं दण्डयितुम् आज्ञाप्य, इदानीं सम्मानयितुं कृतः निर्णयः मन्त्रिणां अधिकारिजनानां च समूहेषु परस्परवादविषयः अभवत्। किञ्च तेषां

मध्ये महाराजस्य विषये उपहासः अपि प्रकटितः। किन्तु मुखम् उद्घाटयितुं न कोऽपि समर्थः। अनन्तरं सप्ताहाभ्यन्तरे एव चन्दनशोणकयोः राजसम्मानं कृतम्। ताभ्यां बहुमूल्यानि बहुमानानि प्रदत्तानि।

वेतालः एवं कथां समाप्य "राजन्, पतिमुखात् सारङ्गस्य वचनानि श्रुत्वा महाराज्ञी स्वीयबुद्धिं परिवर्तितवती खलु। तस्य परिवर्तनस्य कारणं किं स्यात्? वदतु, पश्यामः। सारङ्गः स्वीयपत्युः आप्त-स्नेहितः। अतः तस्य क्रोधोत्पादनम् अनुचितम् इति तस्याः अभिप्रायः वा? एतस्य प्रश्नस्य उत्तरं ज्ञात्वा अपि भवान् न वदति चेत्, भवतः शिरः छिन्नं भिन्नं भवति, सम्यक् स्मरतु!" इति उक्त्वा तूष्णीम् अभवत्।

तदा त्रिविक्रमः उक्तवान् "भवता उक्तेन कारणेन राज्ञ्याः बुद्धेः परिवर्तनं नैव जातम्। सारङ्गः केवलं चन्दनशोणकौ कार्यनिपुणौ इत्येव न उक्तवान्। किन्तु लोपः तयोः कार्ये नास्ति, अन्यत्र कुत्रापि अस्ति इत्यपि सः उक्तवान्। तथा सः वदन् किं सूचितवान् इति आलोच्य, तस्य अन्तरार्थं राज्ञी गृहीतवती। तत् किम् इति चेत्, यस्य वाक्यापि वयसः वृद्ध्या सह अनुभवस्यापि वृद्धिः भवति। अनुभवस्य वर्धनेन कलाकाराणां प्रतिभा अपि नवनवोन्मेषशालिनी भवति। किन्तु प्रतिदिनं क्षीयमाणे मानवशरीरे यथा यथा वयः वर्धते, तथा तथा सौन्दर्यानुभाव-भावना कुण्ठिता भवति। एवं हि सति चन्दन-शोणकाभ्यां निर्मितानि वस्त्राणि आभरणानि च आत्मनः अनुरूपाणि न सन्ति इति चिन्तितवती खलु राज्ञी। वस्तुतः तया स्वीयरूपं तेषाम् आभरणानाम् अनुरूपम् अस्ति वा इति आत्मशोधनं करणीयम् आसीत्। सारङ्गवचनस्य श्रवणानन्तरं राज्ञी यथार्थं ज्ञातवती। न्यूनीभूता अस्ति। तेन कारणेन तथा अभिप्रायः जातः। आत्मनः एतादृशज्ञानोदयस्य कारणीभूतौ चन्दन-शोणकौ सम्माननीयौ इति सा उक्तवती" इति।

एवंरीत्या यदा महाराजस्य मौनभङ्गः जातः, तदा शवसहितः वेतालः तस्य भुजात् तिरोभूय गत्वा पुनः वृक्षस्य शाखाम् अवलम्बितवान्।





# अर्हतापरीक्षा

पूर्वं लक्षणनामकः देशः आसीत्। राजा शुभ्रकेतुः तं देशं पालयति स्म। तस्य आस्थाने अनेके पण्डिताः आसन्। लक्ष्मीनाथपण्डितः तेषु प्रमुखः, राजगुरुः च। तस्मिन महाराजस्य महान् विश्वासः प्रीतिः च आसीत्। तस्य समयोचितेन मार्गदर्शनेन राज्यपालनं सलीलं प्रचलति स्म। तथापि सर्वदा प्रजाहितचिन्तकः महाराजः न तृप्तः। प्रजानां कृते इतोऽपि अधिकं किं किं करणीयम् इति, तथा कथं करणीयम् इति च सः सर्वदा चिन्तयति।

कदाचित् शुभ्रकेतुः नूतनतया एकम् अधिकारस्थानं प्रकल्पितवान्। तस्मिन् स्थाने एकः सुयोग्यः पुरुषः नियोजनीयः इति आलोचितवान् च।

नूतनस्य अधिकारस्य निर्वहणार्थम् इदानीम् एकः मेधावी प्रामाणिकः च पुरुषः अपेक्षितः। तस्य महत् दायित्वं भवति। सः महाराजस्य प्रधानसचिवरूपः भवेत्। राज्यस्य प्रमुखशाखासु सर्वेषां कार्याणां पर्यवेक्षणं करणीयम्।

एतादृशसमर्थस्य निर्वाचनार्थम् अपि अनेके समर्थतराः अपेक्षिताः। तैः विविधशाखासम्बन्धिप्रश्नाः प्रष्ठव्याः।

विविधशाखाभिः नियोजितैः निर्णायकैः तत्तत्शास्त्रसम्बन्धिप्रश्नाः एव प्रष्ठव्याः इति महाराजः सूचितवान्। तदा लक्ष्मीनाथपण्डितः महाराजं "शुभ्रकेतुप्रभो, यः

तदर्थं लक्ष्मीनाथपण्डितस्य साहाय्येन राज्यस्य विविधशाखासु वर्तमानाः कार्यानुभविनः चतुराः च नियोजिताः। एवंरीत्या शुभ्रकेतुमहाराजेन नियोजितेषु समर्थेषु लक्ष्मीनाथपण्डितः अपि अन्यतमः आसीत्।

प्रभुत्वस्य मुख्यसूत्राणि गृह्णाति, तस्य बुद्धिबलं नैतिकसामर्थ्यम् च अपि परीक्षणीयं भवति। अन्तर्विचारेषु बहिर्व्यापारेषु च कथं

कथं प्रवर्तनीयम् इति तेन ज्ञातव्यम्। अतः प्रथमं अभ्यर्थिनां बुद्धिशक्तेः परीक्षा भवत्। अनन्तरम् अहम् अभ्यर्थिनां पुरतः प्रश्न-चतुष्टयम् उपस्थापयामि। तेषां प्रश्नानां समीचीनानि उत्तराणि यः वक्ष्यति, सः एव एतस्य अधिकारस्य प्राप्त्यर्थम् अर्हः भवि-ष्यति इति मम अभिप्रायः" इति निवेदित-वान्।

राजगुरोः अभिप्रायं शुभ्रकेतुमहाराजः अन्ये निर्णायकसदस्याः च अपि अङ्गीकृत-वन्तः।

एकसप्ताहानन्तरं महाराजेन अपेक्षितस्य अधिकारिणः निर्वाचनार्थम् अभ्यर्थिनां परीक्षाकार्यक्रमः आरब्धः।

विविधक्षेत्रेषु विविधशास्त्रेषु परिणताः मेधाविनः अनेकविधप्रश्नैः अभ्यर्थिनः परीक्षितवन्तः। अनन्तरं लक्ष्मीनाथपण्डितः अभ्यर्थिनां पुरतः अधोनिर्दिष्ठं प्रश्नचतुष्टयं प्रकटितवान् –

प्रथमः प्रश्नः - अपहर्तुम् अशक्यम् अपि धनं केन अपह्रियते?

द्वितीयः - पत्न्याः पुरतः अपि अनिवेद्यः विषयः कः?

तृतीयः - अनर्थानां प्रधानकारणं किम्?

चतुर्थः - प्रधानराजोद्योगिनः कृते उचिताः अर्हताः काः? तस्य व्यवहारसरणिः कीदृशी अपेक्ष्यते?

पूर्वं सर्वासु परीक्षासु उत्तीर्णाः अभ्यर्थिनः अपि लक्ष्मीनाथपण्डितस्य प्रश्नचतुष्टयस्य उत्तराणि वक्तुम् असमार्थाः अभवन्।

लक्ष्मीनाथपण्डितस्य प्रश्नानां समाधानानि वक्तुम् अशक्ताः अनेके



अभ्यर्थिनः निराशया ततः प्रतिनिवृत्ताः।

तस्मिन् समये तत्र अन्तिमपङ्क्तौ स्थितः विश्वनाथनामकः युवकः उत्थाय सभायाः पुरतः आगतवान्। सः काशीनगरे शास्त्राभ्यासं कृतवान् आसीत्। अल्प-वयस्कस्य तस्य सामर्थ्यं ये शङ्कितवन्तः, तान् अपि आश्चर्यचकितवान् कुर्वन् सः सर्वासु परीक्षासु उत्तीर्णः अभवत्।

अन्ते लक्ष्मीनाथपण्डितस्य ते चत्वारः प्रश्नाः उक्ताः।

तदा सः "अपहर्तुम् अशक्यं धनं नाम चोरैः अपहर्तुम् अशक्तं धनम्। तदेव ज्ञानधनम्। तस्य अपहारकः नाम नाशकर्ता अहङ्कारः" इति उत्तरितवान्।

तस्य वचनं श्रुत्वा लक्ष्मीनाथपण्डितः सन्तोषेण "साधु उक्तम्। पत्न्याः पुरतः अपि अवचनीयं किम्?" इति पृष्टवान्।

तदा विश्वनाथः "रहस्यम्" इति उक्तवान्।

"साधु साधु! इदानीं तृतीयः प्रश्नः। अनर्थानां मूलकारणं किम्?" इति पृष्टवान् लक्ष्मीनाथपण्डितः।

"मितिम् अतीत्य कृतं सर्वम् अनर्थकारणं भवति" इति उत्तरं दत्तवान् विश्वनाथः।

"समीचीनम् उक्तवान्। इदानीं मम अन्तिमप्रश्नः। कस्यचित् प्रधानराजोद्योगिनः कीदृश्यः अर्हताः अपेक्षिताः? तस्य कीदृशी व्यवहारसरणिः उचिता भवति" इति पृष्टवान् लक्ष्मीनाथपण्डितः।

विश्वानाथः एवंरीत्या उत्तरं दत्तवान् "भवता इतः पूर्वं पृष्टानां त्रयाणां प्रश्ननां उत्तरेषु एव एतस्य चतुर्थस्य प्रश्नस्य उत्तरम् अन्तर्गतम् अस्ति। प्रधानाधिकारस्थेन अहङ्कारः सर्वदा वर्जनीयः। स्वजनानां पुरतः अपि प्रभुत्वसम्बन्धि-रहस्यानि न वक्तव्यानि। सर्वेषु अपि विषयेषु उचितानुचितज्ञानम् आवश्यकम्। व्यवहारसमये परिमितिविवेकः आवश्यकः" इति।

लक्ष्मीनाथपण्डितः तथा तत्र उपस्थिताः सर्वे अपि विश्वनाथस्य उत्तरैः तृप्ताः। ते सर्वे तं बहुधा श्लाघितवन्तः। शुभ्रकेतुराजः महता सन्तोषेण सद्यः एव विश्वनाथं तस्मिन् प्रधानाधिकारस्थाने नियोजितवान्।






अस्माकं देवालयाः

# चिदम्बरम्

पूर्वं कदाचित् दारुकावने मुनीनां कश्चन आश्रमः आसीत्। तत्रत्याः मुनयः आत्मनः ज्ञानस्य पराकाष्ठतायाः विषये गर्वम् अनुभवन्तः, स्वशक्तिविषये विशेषतः दुरभिमानिनः सञ्जाताः। 'सर्वे अस्मान् पूजयेयुः, यतः तादृशी योग्यता अस्माकम् अस्ति' इति चिन्तयन्ति स्म ते।

कदाचित् मुनीनाम् अनुपस्थितौ कश्चन युवकः भिक्षुः तत्र आगतवान्। सः गायन् कथां वक्तुम् आरब्धवान्। युवकम् एतं संन्यासिनं दृष्ट्वा आकृष्टाः मुनिपत्न्यः तं परितः आगत्य स्थितवत्यः।





आश्रमं प्रत्यागताः मुनयः तत्रत्यं दृश्यं दृष्ट्वा क्रुद्धाः। अन्तः गन्तुं ते स्वपत्नीः आज्ञापितवन्तः। तर्जितवन्तः च। किन्तु तेन किमपि प्रयोजनं न सिद्धम्। मुनिपत्न्यः स्वपतीन् कटाक्षेण अपि न दृष्टवत्यः।




इदानीं मुनयः स्वकीयाः अद्भुतशक्तीः प्रयोक्तुं सिद्धाः अभवन्। महाबलशालिनं व्याघ्रम् एकं सृष्ट्वा ते तं युवकसंन्यासिनः समीपं प्रेषितवन्तः। भयङ्करं गर्जनं कुर्वन् व्याघ्रः युवकस्य उपरि आक्रमणार्थं सिद्धः अभवत्।

युवकः संन्यासी मन्दहासं प्रकटन् समीपम् आगच्छन्तं व्याघ्रं स्पृष्टवान्। अपरक्षणे व्याघ्रः अदृश्यः जातः। तदीयं चर्म युवकस्य कटौ वस्त्रवत् स्थितम् अभवत्। एतत् दृष्ट्वा मुनयः आश्चर्यचकिताः।





पराजयम् अङ्गीकर्तुम् अनिच्छन्तः मुनयः एकं वामनं पिशाचं सृष्ट्वा युवकसंन्यासिनः उपरि प्रेरितवन्तः। वामनः पिशाचः विकटाट्टहासं कुर्वन् युवकसंन्यासिनः समीपम् आगच्छत्। तस्य पदतले अपतत् च।

एतत् दृष्टवतां मुनीनां विवेकः जागरितः। "एषः युवकः सामान्यः न स्यात्, अपि तु वेषान्तरेण आगतः देवः एव स्यात्" इति तर्कितवन्तः ते। सर्वे सम्भूय समीपम् आगत्य सङ्कोचम् अनुभवन्तः "कः भवान्?" इति पृष्टवन्तः।





तदा सः संन्यासी नैजवेषेण आत्मानं प्रदर्शितवान्। परशिवः एव मुनीनाम् अहङ्कारस्य निवारणार्थम् एवं वेषान्तरेण आगतः आसीत्। शिवस्य दर्शनेन मुनीनाम् अहङ्कारः समूलं नष्टः। ते शिवस्य पादौ साष्टाङ्गं नमस्कृतवन्तः।

सर्वे मुनयः शिवनामसङ्कीर्तनं कुर्वन्तः शिवलीलाः वर्णयन्तः च शिवस्य पुरतः गातुम् आरब्धवन्तः। गानेन तुष्टः शिवः नृत्यम् आरब्धवान्। शिवनृत्येन मुनयः परमानन्दसागरे निमग्नाः अभवन्। अत्रान्तरे शिवः अदृश्यः अभवत्।





शिवेन कृतस्य एतस्य नाट्यस्य विषयं आदिशेषः श्रुतवान्। 'एतत् नाट्यं द्रष्टुम् अहम् अतीव कुतूहली अस्मि' इति सः शिव निवेदितवान्। किन्तु शिव- नाट्य- दर्शने कश्चन नियमः आसीत् यत् दर्शनेच्छुना मानवजन्म प्राप्तव्यम् आसीत्।

आदिशेषः पतञ्जलिनाम्ना मानवजन्म प्राप्य शिवनाट्यं दृष्टवान्। अनन्तरं नाट्यरतस्य शिवस्य विग्रहं कारितवान्। नटराजस्य पादतले अहङ्काररूपी राक्षसः अस्ति। एकस्मिन् हस्ते स्थितः डमरुः जीवनसङ्गीतं सङ्केतयति। अपरहस्ते स्थितः अग्निः शक्तिस्वरूपं प्रदर्शयति। तृतीयं तु भक्तरक्षकः अभयहस्तः। चतुर्थः हस्तः शरणागतानां रक्षाणार्थं सिद्धः अस्ति।






यत्र शिवः नाट्यं कृतवान्, तत् स्थलम् 'चिदम्बरं' नाम्ना प्राचीनकाले एव प्रसिद्धम् आसीत्। द्वात्रिंशत् एकर् मिते प्रदेशे विशालं व्याप्तस्य देवालयस्य एतस्य द्विसहस्रवर्षाणाम् इतिहासः अस्ति। देवालये स्थिताः शिल्पाः अत्याकर्षकाः आश्चर्यजनकाः च।



# चतुरः चोरः

सामान्यतः शतवर्षेभ्यः पूर्वं हाङ्गी चौ नगरे कश्चन प्रसिद्धः चोरः आसीत्। तस्य वास्तविकं नाम किम् इति देशे कोऽपि न जानाति। सः तदा तदा धनिकगृहाणि प्रविश्य धनाभरणादीनि चोरयति। तथाऽपि तं कोऽपि द्रष्टुं न शक्तवान्। चौर्यसमये सः गृहस्य भित्तौ 'अहम् आगतः अस्मि' इति लिखित्वा गच्छति स्म।

अतः जनाः एतं 'अहम् आगतोऽस्मि चोरः' इत्येव आह्वयन्ति स्म।

कालान्तरे एतस्य चोरस्य पीडा असहनीया अभवत्। जनाः महाराजं प्रार्थितवन्तः - "अस्मान् एतस्मात् चोरतः रक्षतु" इति।

'अहम् आगतोऽस्मि चोरः कथाञ्चित् ग्रहीतव्याः एव' इति राजाज्ञा आगता। नगररक्षणप्रमुखः स्वसहकारिणः कठोरम् आज्ञापितवान् - 'एमसप्ताहाभ्यन्तरे एषः चोरः भवद्भिः ग्रहीतव्यः। अन्यथा उग्रतया दण्डयिष्यामि। उद्योगतः निष्कासयिष्यामि च' इति।

रक्षकभटाः इदानीं सङ्कटे पतिताः। सः चोरः कीदृशः, तस्य आकारः कः, किं सः वामनः उत उन्नतः, अथवा सः स्थूलः उत कृशः, किं वा सः सुरूपः उत उग्रः इति कोऽपि न जानाति। एतादृशस्य ग्रहणं सप्ताहावधौ कथं वा शक्यते? अनन्योपायाः भटाः अन्धकारे सूचिकाम् इव चोरस्य अन्वेषणं कृतवन्तः। अन्ते कञ्चित् कृश-कायं गृहीतवन्तः एव।

तं न्यायाधिकारिणः पुरतः नीत्वा ते उक्तवन्तः - "श्रीमन्! एषः एव 'अहम् आगतोऽस्मि चोरः'। योग्यदण्डेन दण्डयित्वा जनानां कष्टं परिहरणीयम्' इति।

"एषः एव 'अहम् आगतोऽस्मि चोरः' इत्यत्र किं प्रमाणम्? कः आधारः?" इति

"चीनादेशस्य जानपदकथा"



पृष्टवान् न्यायाधिकारी।

"वयं महता परिश्रमेण सुपरीक्ष्य एतं गृहीतवन्तः। सः एव चोरः एषः इत्यत्र वयम् एव प्रमाणभूताः। किमन्यत् साक्ष्यम् अपेक्षितम् अत्र?" इति रक्षकाधिकारिणः एककण्ठेन पृष्टवन्तः।

तदा सः पुरुषः उक्तवान् - "महाप्रभो! राजदण्डतः भीता एते मां गृहीतवन्तः। दौर्भाग्यवशात् अहम् एतेषां दृष्टिगोचरः अभवम्। वस्तुतः अहं चोरः न" इति।

न्यायाधीशः एतत् श्रुत्वा 'एषः महाचोरः स्यात् वा न वा' इति सन्देहे पतितः। तदा भटप्रमुखः उक्तवान् - "महाप्रभो! एतस्य वचने विश्वासः न करणीयः। वस्तुतः एषः एव महाचोरः। एतस्य ग्रहणार्थं वयं सर्वे निद्राहारादिकं त्यक्त्वा प्राणान् पणीकृत्य कार्यं कृतवन्तः। इदानीं त्यक्तः चेत् पुनः कदापि एषः न उपलप्स्यते" इति।

वस्तुतत्त्वं निर्णेतुम् अशक्तः न्यायाधिकारी उक्तवान् - "एतं सद्यः कारागारे स्थापयन्तु। मासद्वयं यावत् प्रतीक्षां कुर्मः। अत्रान्तरे वस्तुस्थितिः ज्ञायते" इति।

वस्तुतः तैः गृहीतः 'अहम् आगतोऽस्मि चोरः' एव। कारागारं प्रविष्टः सः कारागाराधिकारिणं विनयेन उक्तवान् - "श्रीमन्! नूतनः बन्धी रिक्तहस्तेन कारागारं न प्रविशेत्। किन्तु किं करोमि? बन्धनसमये रक्षकभटाः मम समीपे विद्यमानं सर्वम् अपि वशीकृतवन्तः। पर्वतेश्वरमन्दिरस्य पार्श्वे महाशिलायाः अधः मया किञ्चित् धनं स्थापितम् अस्ति। कृपया तत्र गत्वा भवान् तत् धनम् आनयतु" इति।

कारागाराधिकारी प्रथमं तु एतस्य वचने न विश्वसितवान्। तथापि आशया सः पर्वतेश्वरमन्दिरं गतवान्। तत्र सः धनं प्राप्तवान्।

तद्दिनतः आरभ्य अधिकारी एतं बन्धिनं करुणया एव दृष्टवान्। क्रमशः तयोः मध्ये गाढमैत्री उत्पन्ना।

अन्यस्मिन् दिने एषः बन्धी अधिकारिणम् उक्तवान् - "ग्रामसीमायां काचित् सेतुः अस्ति किल? तस्य अधः अपि मया किञ्चित् धनं स्थापितम् अस्ति। तदपि भवान् एव आनेतुम् अर्हति" इति।

"सेतोः उपरि सर्वदा जनाः सञ्चारन्ति किल?" इति उक्तवान् कारागाराधिकारी।

"वस्त्रक्षालनार्थं नदीगमनम् अभिनयन् भवान् कण्डोलेन सह तत्र गच्छतु। धनं स्वीकृत्य कण्डोले स्थापयित्त्वा तदुपरि वस्त्राणि स्थापयतु। तदा कोऽपि किमपि न जानाति" इति उक्तवान् बन्धी।

अधिकारी तथैव आचरितवान्। एतेन सः पुनः अपि यथेष्टं धनं प्राप्तवान्। एतेन तयोः मैत्री गाढा जाता। परमसन्तुष्टः अधिकारी तद्दिने रात्रिसमये मद्यम् आनीय बन्धिना सह पिबन् सन्तोषकूटम् आचरितवान्।



"भोः! अद्य रात्रौ अहं मम गृहं गत्व आगमिष्यामि। सूर्योदयतः पूर्वं प्रत्यागमिष्यामि एव। अहं कदाचित् पलायनं कुर्याम् इति भीतिः मास्तु। यदि तथा पलायनं करोमि तर्हि मम चोरत्वं मया एव अङ्गीकृतं भविष्यति। अन्यच्च पलायनं मूर्खतायाः विषयः। अद्य नो चेत् श्वः वा पुनः बन्धनं भवेत् एव। वस्तुतः अहं चोरः अपि न किल?" इति सः बन्धी उक्तवान्।

अधिकारिणः तु बन्धिनः वचने विश्वासः नास्ति। किन्तु एवं गमनार्थम् अनुमतिदानम् अनुचितम् इति सः वक्तुम् अपि न शक्नोति, यतः दाक्षिण्यम्। अतः सः मौनं शिरः चालितवान्।

बन्धी द्वारमार्गम् अनपेक्षमाणः छदिम् आरुह्य ततः गतवान्। पुनः प्रातःकालसमये येन मार्गेण गतं तेन मार्गेण एव प्रत्यागत्य निद्रामग्नं कारागाराधिकारिणम् उत्थाप्य उक्तवान् - "भोः! अहम् आगतोऽस्मि। अहम् आगतोऽस्मि" इति।

"उक्तं वचनं परिपालितवान् किल? अहम् उज्जीवितः। समीचीनः पुरुषः भवान्" इति सन्तोषेण उक्तवान् अधिकारी।

"अहं कदापि अन्याय्यं न आचरामि। भवतः गौरवरक्षणं मम कर्तव्यम्। भवतः उपकारं स्मरामि अहम्। प्रत्युपकाररूपेण भवतः गृहे लघु उपायनं स्थापयित्वा आगतवान् अपि। इदानीम् एव गृहं गत्वा पश्यतु। अहं तु सद्यः एव बन्धनात् उन्मुक्तः भविष्यामि। कियत्पर्यन्तं वा निरपराधिनं बन्धने स्थापयेयुः?" इति उक्तवान् बन्धी।

कारागाराधिकारी कुतूहलेन स्वगृहम्

गतवान्। "भवान् एव स्वयम् आगतवान् वा? भवतः आह्वानार्थं सेवकं प्रेषयितुं चिन्तयन्ती आसम्। उषःकाले आश्चर्यजनकं किं प्रवृत्तम् इति जानाति वा? गृहस्य छदेः उपरि कश्चन शब्दः श्रुतः। तावता कोऽपि ग्रन्थिः अधः पतितः। तस्य अन्तः रजतस्थालिका, सुवर्णाभरणानि च आसन्" इति उक्तवती अधिकारिणः पत्नी।

'बन्धिना उक्तम् उपायनम् एतदेव' इति ज्ञातवान् अधिकारी।

"कमपि न वदतु। सुरक्षितरूपेण अन्तः स्थापयतु। कालान्तरे किञ्चित् किञ्चित् विक्रीय धनं सङ्ग्रहीष्यामः" इति पत्नीम् उक्तवान् अधिकारी।

तद्दिने षड्सप्तजनाः न्यायाधिकारिणः समीपम् आगत्य उक्तवन्तः - "अस्माकं गृहम् अद्य 'अहम् आगतोऽस्मि चोरः' आगत्य सर्वम् अपहृतवान्। भित्तौ 'अहम् आगतोऽस्मि' इति लिखित्वा गतवान्। एषः महाचोरः यावच्छीघ्रं बन्धने स्थापनीयः" इति।

"मया पूर्वम् एव आलोचितम् आसीत् यत् एषः बन्धी 'अहम् आगतोऽस्मि चोरः' न। वास्तविकः चोरः तु स्वच्छन्दम् अटन् अस्ति" इति चिन्तितवान् न्यायाधिकारी।

"निर्दोषी कश्चित् वृथा मया पीडितः, मासं यावत् कारागारे स्थापितः च" इति पश्चत्तापम् अनुभवन् न्यायाधिकारी तस्य बन्धिनः विमुक्त्यर्थम् आदिष्टवान्। मासाभ्यन्तरे 'अहम् आगतोऽस्मि चोरः' कारागारे स्थापनीयः' इति रक्षकाधिकारिणः आदिष्टवान् च।

महाचोरः तु कारागारं प्रविश्य अपि उपायेन पलायनं कृतवान्। एवं पलायितः एव 'अहम् आगतोऽस्मि चोरः' इति एकः एव जानाति। यश्च कारागाराधिकारी सन् द्वित्रवारं तस्य हस्ततः धनं स्वीकृतवान् आसीत्।

किन्तु सत्यं ज्ञात्वा अपि प्रकटतया सः वक्तुं न शक्नोति। सः सत्यं वदति चेत् तदीयः अव्यवहारः प्रकटी भविष्यति किल?





# शिवलीला

जनन्याः वचनानि श्रुत्वा सिद्धरामः परम-सन्तुष्टः अभवत्। तस्य मनः अभिमानपूर्णं जातम्। "एवं तर्हि दीपावलीपर्वार्थम् अग्रजाम् आवुत्तं च अनेष्यामः अम्ब। सर्वेषाम् अग्रजाः आवुत्ताः च पर्वार्थिम् आगमिष्यन्ति। किन्तु अम्ब, अद्यावधि अस्माकम् अग्रजा आवुत्तः च किमर्थं न आहूतौ?" इति सः पृष्टवान्।

"वत्स, तावद्दूरं गत्वा तौ आनेतुम् अत्र कः वा अस्ति? भवतः पिता दिवङ्गतः खलु? भवान् तु अल्पवयस्कः। मार्गः दुर्गमः अस्ति। अरण्यमार्गेण गन्तव्यम्। अरण्ये सिंहाः, व्याघ्राः, भल्लूकाः, नागाः च सन्ति। किञ्च वयं दरिद्राः। भवतः अग्रजा आवुत्तः च महदैश्वर्यसम्पन्नौ। तौ अत्र आगत्य मां भवन्तं च पीडयितुं न इच्छतः। ताभ्यां सह तयोः बन्धूनां बृहत्समूहः अपि अस्ति। आवां तु प्रातः किञ्चित् खादावः चेत् रात्रौ निराहारः। एतादृशनिर्गतिकाः वयं तेषां सर्वेषाम् उपचारं कर्तुं कथं शक्नुयाम? यदा भवान् प्रौढः भूत्वा धनार्जनं कर्तुं समर्थः भविष्यति तदा भवतः अग्रजाम् आवुत्तं च आनेतुम् अर्हति। इदानीं चिन्तां न करोतु" इति माता सिद्धरामं समाश्वासितवती।

तदा सिद्धरामः किमपि अनुक्त्वा विलक्षणं गाम्भीर्यम् आश्रितवान्। अन्ते श्रीशैलं प्राप्तवान्। तत्र असंख्याकाः देवालयाः तीर्थानि च आसन्।

सिद्धरामः अग्रजा आवुत्तः च कुत्र स्याताम् इति तत्र सर्वत्र अन्वेषणं कुर्वन् अटितवान्। 'यदा तौ मां पश्यतः, तदा अवश्यं परिचयं प्राप्नुतः' इति तस्य भावना।

२. सिद्धरामस्य गुरुभक्तिः



"मल्लिकार्जुनः कुत्र अस्ति?" इति कांश्चन जनान् सः पृष्टवान्। ते देवालयं प्रदर्शयन्ति स्म। सिद्धरामः तत्र गत्वा पश्यति, तत्र शिवलिङ्गं विना किमपि अन्यत् नास्ति।

निरन्तरम् अटनेन सिद्धरामः बहु श्रान्तः। तदा सः देवालयं प्रविश्य शिवलिङ्गस्य पुरोभागे उपविश्य "अग्रजाम् आवुत्तं च दीपावलीपर्वार्थं गृहं नेतुम् इच्छन्, कमपि अनुक्त्वा, गृहात् प्रस्थाय, महता श्रमेण अत्र आगतवान् अस्मि। अस्माकं ग्रामे सर्वषां गृहेषु अग्रजाः आवुत्ताः च दीपावलीनिमित्तं आगमिष्यन्ति। माता मम अग्रजाम् आवुत्तं च सर्वदा स्मरति। एतावत्पर्यन्तं नैव आहूतौ इति तयोः क्रोधः वा? मां दृष्ट्वा अपि न आलपतः वा? तौ धनिकौ स्याताम्, किन्तु बन्धुत्वं कथम् अपगच्छेत्? वयं दरिद्राः इति तिरस्कारम् अकृत्वा तैः अवश्यम् आगन्तव्यम्। भोः लिङ्गस्वरूप! भवान् एव तौ वदतु प्रभो! ताभ्यां विना अहम् एकाकी निश्चयेन गृहं न प्रतिगच्छामि" इति उक्तवान्।

सिद्धरामस्य प्रलापाः अरण्यरोदनसदृशाः एव जाताः। देवीम् अपि सः बहुप्रकारैः प्रार्थितवान्। किमपि प्रयोजनं न अभवत्।

असहनीयां निराशां प्राप्य सिद्धरामः आत्महत्यां कर्तुं निश्चितवान्। शिखरम् आरुह्य ततः अधः उत्पतितुं सिद्धः अभवत्।

अत्रान्तरे कोऽपि तस्य भुजौ गृहीतवान्। तस्य एकस्मिन् पार्श्वे एकः पुरुषः, अन्यस्मिन् पार्श्वे एका स्त्री च आस्ताम्।

"कौ भवन्तौ? मरणे प्रवृत्तं मां भवन्तौ किमर्थं वारयतः? मम अग्रजा आवुत्तः च निष्करुणौ स्तः। भवतोः किमर्थं मदुपरि करुणा?" इति पृष्टवान् सिद्धरामः।

तदा सा स्त्री वात्सल्येन "भ्रातः! आवां परकीयौ इति चिन्तयति वा? अहम् एव भवतः अग्रजा भ्रमराम्बा भोः! एषः एव भवतः आवुत्तः। वराकस्य भवतः आवयोः परिचयः नास्ति। भवतः मनोदार्ढ्यं कीदृशम् अस्ति इति परीचयः कस्य वा नास्ति?" इति उक्तवती।

सिद्धरामः परमानन्दपरिपूर्णहृदयः भूत्वा अग्रजायाः आवुत्तस्य च पादान् संस्पृश्य साष्टाङ्गनमस्कारं कृतवान्। तौ स्वीयपुत्रौ



स्वपरिवारं च प्रदर्शितवन्तौ। सिद्धरामः तान् सर्वान् स्वग्रामम् आगच्छन्तु इति प्रार्थितवान्।

अत्र एवं जातम्। तत्र सिद्धरामस्य माता बालम् अन्विष्य, कुत्रापि अप्राप्य, अतीव चिन्तामग्ना आसीत्। स्वीयवचनानि यथार्थानि इति मत्त्वा पुत्रः श्रीशैलम् एव गतवान् स्यात् इति तस्याः संशयः उत्पन्नः। सः जीवति वा न वा इति सा प्रलापं करोति स्म।

कानिचन दिनानि व्यतीतानि। दीपावली-पर्वदिनं सन्निहितम्। तस्मिन् प्रातःकाले सिद्धरामः धावन् धावन् गृहम् आगत्य "अग्रजां, आवुत्तं, तयोः परिवारजनान् च आनीतवान् अस्मि, ते सर्वे देवालयस्य समीपे सन्ति" इति कथितवान्। सिद्धरामस्य माता आनन्देन आश्चर्येण च देवालयं गत्वा, तत्र पार्वतीपरमेश्वरौ, विनायकं, कुमार-स्वामिनम्, अन्यान् शिवपरिवारजनान् च सानन्दं दृष्ट्वा, तान् सर्वान् गृहमं आगन्तुम् आहूतवती।

ते सर्वे तस्याः गृहं प्रति प्रस्थितवन्तः। तस्याः पुरातनगृहस्य स्थाने इदानीं नूतनं दिव्यभवनम् आसीत्। सर्वे अतिथिजनाः नूतनभवनं प्रविष्टवन्तः। तस्मिन् दिने ग्रामस्थाः सर्वे प्रकाशमानं नूतनं तत् दिव्यभवनं दृष्ट्वा आश्चर्यचकिताः अभवन्। गृहस्य द्वाराणि पिहितानि आसन्। अन्तः तु महान् कोलाहलः! उत्साहपूर्णसमारम्भः!

दीपावलीदिने सिद्धरामस्य अतिथिरूपेण आगतौ पार्वतीपरेमेश्वरौ सिद्धरामं, तस्य जननीं च स्वीयपरिवारेण सह कैलासं नीतवन्तौ।

एकदा गयासुरनामकः राक्षसः लोक-त्रयम् अपि पराजित्य कैलासस्य उपरि आक्रमणं कृतवान्। क्रुद्धः शिवः स्वीयजटा-जूटम् आकृष्य यदा भूमिम् बलात् एकवारं प्रघट्टितवान्, तदा एकः घोराकारः उत्पन्नः। तस्य मुखं भयङ्करं, शरीरं पर्वतसदृशम् आसीत्। सः गयासुरराक्षसं गिलितुं तस्य समीपं गतवान्। तदा गयासुरः भयेन कम्पमानः, शिवम् एव शरणं गतवान्। तदा शिवः शान्तचित्तः भूत्वा तस्मै अभयम् अनुगृहीतवान्।

तदा भयङ्करमुखः किङ्कर्तव्यतामूढः भूत्वा "बुभुक्षा! बुभुक्षा! खाद्यम् अपेक्षितम्"

इति उच्चैः आक्रोशनं कर्तुम् आरब्धवान्।

"स्वीयशरीरमेव खादित्वा बुभुक्षां शमयतु" इति उक्तवान् शिवः।

शिवस्य आज्ञां भक्त्या शिरोधार्यां मत्त्वा भयङ्करमुखः स्वशरीरं सम्पूर्णतया स्वयमेव खादितवान्। अन्ते तस्य मुखमात्रम् अवशिष्टम्। एतेन सन्तुष्टः शिवः तस्य मुखस्य 'कीर्तिमुखः' इति नाम निश्चित्य "भोः कीर्तिमुख, भवान् सर्वेषां देवानां मस्तकेषु स्थित्वा, तेषां कृते सत्कीर्तिं सम्पादयन् तिष्ठतु" इति वरेण अनुगृहीतवान्।



एवंरीत्या शिवस्य अंशेन उत्पन्नः कीर्तिमुखः, मकरतोरणानां मध्ये, सर्वस्य अपि देवताविग्रहस्य मस्तकस्य उपरि मध्यभागे स्थित्वा अलङ्कारभूतः अभवत्।

बदरिकाश्रमे दूर्वासमुनिः तपः आचरन् आसीत्। एकस्मिन् दिने मध्याह्नसमये सः देवतार्चनं कृत्वा, अग्निकार्यं समाप्य हरिणशावकान् हविश्शेषं खादयति स्म। तदा तुम्बुरुनामकः प्रमथः स्वीयपत्न्या सह आकाशमार्गेण गच्छन्, दूर्वासाश्रमस्य पुरोभागे स्थितान् हरिणशावकान् उद्दिश्य छोटिकानादं कृतवान्। तं शब्दं श्रुत्वा हरिणशावकाः भीत्या इतस्ततः धावितवन्तः। दूर्वासमुनेः क्रोधः नाम सर्वत्र प्रसिद्धः खलु! इदानीं तु सः मुनिः क्रोधेन ज्वलन् तुम्बुरुं दृष्ट्वा 'भवान् मानवजन्म प्राप्नोतु" इति शापं दत्तवान्।

तत् शापवचनं श्रुत्वा भीतः तुम्बुरुः विमानतः अवतीर्य, अधः आगत्य "स्वामिन्, भवतः हरिणशावकान् दृष्ट्वा प्रीत्या अहं छोटिकानादं कृतवान्। किन्तु तस्य फलरूपेण भवतः शापवचनं लब्धम्। भवतः शापवचनस्य वैयर्थ्यं कदापि न दृष्टम्। अतः अस्तु, अहं मानवजन्म स्वीकरोमि। किन्तु तस्मिन् जन्मनि अपि यथा अहं शिवभक्तः भविष्यामि, तथा अनुगृह्णातु" इति प्रार्थितवान्। "तथा एव अस्तु" इति दूर्वासमुनिः अनुगृहीतवान्।

एवंरीत्या दूर्वासमुनेः शापम् अनुभवितुं तुम्बरुः काञ्चीनगरस्य एकस्मिन् वैश्यकुटुम्बे जन्म गृहीतवान्। तत्र तस्य नाम चिरुतोण्डः इति अभवत्। तस्य पत्नी अपि तिरुवेङ्गनाची इति नाम्ना जन्म प्राप्य,

चिरुतोण्डस्य पत्नी अभवत्। तयो सिरियालनामकः पुत्रः जातः।

चिरुतोण्डः वीरशैवाचारान् अनुसरन् निष्ठया आचारपरायणः आसीत्। सः एकाम्रनाथम् अर्चयन्, शिवभक्तान् सेवमानः कालं यापयति स्म। शिवभक्ताः यस्मिन् कस्मिन् अपि समये आगत्य, यत् यत् याचन्ते तत् सर्वं यथाशक्ति ददाति चिरुतोण्डः।

एवं हि सति कदाचित् एकः शिवभक्तः तस्य गृहम् आगत्य, तेन पूजितः, आशीर्वचनैः तं सन्तोष्य "वत्स, अहं प्रतिदिनं शिवम् इक्षुरसेन अभिषिच्य तस्य अर्चनां करोमि। एतत् मम व्रतम्। अतः इदानीं भवान् स्वहस्तेन एव यन्त्रं चालयित्वा, इक्षुरसम् उत्पाद्य, एकं कलशं प्रपूर्य ददातु" इति उक्तवान।

चिरुतोण्डः महता सन्तोषेण इक्षुदण्डान् क्रीत्वा आनेतुं धनं गृहीत्वा आपणं गतवान्।

एककलशपूर्णं रसम् उत्पादयितुं शतम् इक्षुदण्डाः अपेक्षिताः इति चिन्तयित्वा चिरुतोण्डः इक्षूणां शतदण्डान् क्रीत्वा, तान् सूत्रेण दृढं बद्धवान्। किन्तु तावत् बृहत् भारं उन्नेतुं सः असमर्थः अभवत्। तदा शिवः मानवरूपेण तस्य समीपम् आगत्य इक्षुदण्डान् आनेतुं साहाय्यं दत्तवान्। इत्थं द्वौ अपि सम्भूय इक्षुदण्डान् आनीय गृहे स्थापितवन्तौ। अनन्तरं झटिति शिवः अदृश्यः अभवत्।

यदा शिवः सहसा तिरोहितः जातः, तदा चिरुतोण्डः आश्चर्यम् अनुभवन्, स्वहस्तेन एव यन्त्रं चालयन्, इक्षुरसम् उत्पाद्य कलशं पूरितवान्। अनन्तरं कलशपूर्णं तम् इक्षुरसं गृहीत्वा शिवभक्तः शिवम् अभिषिक्तवान्।

तत्र कैलासे स्वेदजलेन आर्द्रीभूतं शिवकण्ठं दृष्ट्वा, पार्वतीदेवी तस्य कारणं किम् इति शिवं पृष्टवती। शिवः तां चिरुतोण्डस्य वृत्तान्तं कथयित्वा "मम भक्तः यदा इक्षुदण्डान् उन्नेतुम् असमर्थः भूत्वा कष्टम् अनुभवन् आसीत्, तदा अहं साहाय्यं कृतवान्। तेन अहं सः च स्वेदजलेन आर्द्रीभूतौ जातौ" इति उक्तवान्। तादृशं भक्तं दृष्टुं पार्वतीदेव्याः आशा उत्पन्ना।






# उन्नतन्यायालयः

पूर्वं लीलाधरनामकः राजा चम्पकदेशं पालयति स्म। तस्य पत्न्याः नाम नन्दिनी-देवी। महाराजस्य तु प्राणापेक्षया अधिकं प्रीतिः तस्याम्। तस्याः मनसः किञ्चिदपि खेदं न जनयति स्म सः।

नन्दिनीदेव्याः प्रियानुजः तया सह एव आगतः आसीत्। तस्य नाम नागसेनः। सः अग्रजायाः प्रीतिं सम्पाद्य, राज्यपालनविषये स्वेच्छया किमपि किमपि कारयति स्म। वस्तुतः सः विलासजीवनम् इच्छति। अतः सः कृषिकेभ्यः वणिजेभ्यः च अन्याय्येन धनं स्वीकरोति। यः कोऽपि तस्य विरोधं प्रकटयति चेत् 'राज्ञः अनुमत्यनुगुणमेव व्यवहरन् अस्मि अहम्' इति दर्पेण वदति स्म सः।

तस्य एतादृशान् अक्रमव्यवहारान् दृष्ट्वा प्रजाप्रमुखाः, राजोद्योगिनः बहुवारं राज्ञः समीपे उक्तवन्तः। तथापि राजा 'पत्न्याः प्रियानुजं श्यालं किमपि वदामि चेत् पत्न्याः मनसः खेदः भवति' इति मौनं तिष्ठति स्म।

एकस्मिन् दिने जयमल्लनायकः युवकः स्वसमीपे विद्यमानं अश्वद्वयं 'विक्रयणं करणीयम्' इति राजधानीम् आनीतवान्। विपण्यां गच्छन् नागसेनः तम् अश्वद्वयं दृष्ट्वा युवकस्य समीपम् आगतवान्।

एषः अश्वं क्रेतुम् आगतवान् इति मत्त्वा युवकः तस्य मूल्यं वक्तुम् उद्युक्तः। तत्क्षणमेव नागसेनः तं निवार्य "यदा विपणिं आगच्छन्ति तदा प्रथमं शुल्करूपेण पञ्चविंशति-रजतनाणकानि दातव्यानि। एषः नियमः। अतः रजतनाणकानि ददातु, अथवा एकम् अश्वं त्यजतु" इति दर्पेण उक्तवान्।

तस्य कथनेन युवकः आश्चर्यचकितः। "एतावत्पर्यन्तम् अपि विक्रयणम् एव न अभवत्। शुल्कं दातव्यम् इत्यस्य कः अर्थः?

कुत्र अस्ति नियमः?" इति कोपेन पृष्टवान् सः।

एतत् वचनं श्रुत्वा कोपाविष्टः नागसेनः "भोः, अहं कः इति ज्ञातवान् वा? माम् एव प्रतिवदति वा?" इति दुर्वचनैः निन्दन् युवकस्य कपोलं ताडितवान्।

तस्य वचनेन युवकः अपि कोपाविष्टः अभवत्। कोपतः खड्गं बहिः आकृष्टवान् सः। नागसेनः अपि खड्गम् आकृष्य तस्य उपरि आक्रमणं कृतवान्। किञ्चित्काल-पर्यन्तम् उभौ अपि युद्धं कृतवन्तौ। तदनन्तरं किञ्चित् व्रणितः नागसेनः ततः पलायनं कृतवान्।

सः साक्षात् लीलाधरमहाराजस्य समीपं गतवान्। राज्ञी नन्दिनी मन्त्री मकरन्दश्च तत्रैव आस्ताम्।

नागसेनः महाराजम् उक्तवान् - "भोः पश्यतु, ग्रामतः आगतः कश्चित् उद्धतः अश्ववणिक् ताडनेन मां क्षतयुक्तं कृतवान्। इदानीं विपण्याम् अस्ति। शीघ्रातिशीघ्रं सः कठोरतया दण्डनीयः" इति।

राजा यदा भटान् आह्वातुम् उद्युक्तः तदा मन्त्री "प्रभो, कठोरदण्डनं तु अस्ति एव। प्रथमं तं वणिजं तत्रत्यान् साक्षिणः च आनाययामः। तदा न्यायविचारणं सुलभं भवति" इति उक्तवान्।

तदा राज्ञी नन्दिनी - "राजबन्धोः उपरि आक्रमणं कुर्वतः सामान्यस्य वणिजः कियान् गर्वः स्यात्? विचारणीयं किमस्ति अत्र? इदानीमेव तम् आनाय्य मरणदण्डनं ददातु"



इति आज्ञां दत्त्वा साक्षात् ततः गतवती।

राजा भटान् दृष्टवान्। ते तत्क्षणमेव विपणिं गत्वा जयमल्लनामकं युवकं गृहीत्वा महाराजसमीपम् आनीतवन्तः।

"मया कोऽपि अपराधः न कृतः" इति पुनः पुनः वदन् सः वणिक् प्रवृत्तं सर्वं निवेदितवान्। किमर्थं युद्धं करणीयम् आपतितम् इत्यपि सकारणं निवेदितवान्।

यद्यपि युवकस्य वचनं सत्यमिव भासते। विक्रयणतः पूर्वं शुल्कं दातव्यम् इति नियमः अपि नास्ति तथापि राज्ञी कुपिता भवति इति चिन्तयित्वा राजा युवकस्य शूलारोपणम् आदिष्टवान्।

भटाः युवकं कारागृहं प्रति नीतवन्तः। परेद्युः एव दण्डनम् आसीत्।

महाराजस्य मनसः समाधानं न आसीत्। "एकः निरपराधी मया दण्डितः किल।" इति मनसि एव खेदम् अनुभवति सः। प्रातःकाले एव युवकः शूलारोपितः भविष्यति। अस्यां सङ्कटपरिस्थित्यां राजा रात्रौ निद्रितुं न शक्तवान्।

सः मन्त्रिणम् आहूय "दण्डनात् युवकस्य विमुक्तिं कर्तुं कोऽपि उपायः अस्ति वा? किन्तु तेन राज्ञ्याः मनसः अपि वेदना न भवेत्" इति पृष्ठवान्।

मन्त्री किञ्चित्कालं विचिन्त्य "प्रभो, एकः उपायः अस्ति। युवकेन राज्ञ्याः नागसेनस्य च क्षमा प्रार्थनीया। प्राणभिक्षा च स्वीकरणीया। तदनन्तरं तस्मै कानिचन दिनानि कारागहदण्डनं दत्तं चेत् समाप्तम्" इति उपायं सूचितवान्।



तथैव राजा मन्त्री च कारागृहं गतवन्तौ। मन्त्री युवकं "प्रवृत्तं तु प्रवृत्तम्। यदि भवतः दण्डनं न भवेत् तर्हि भवता राज्ञ्याः, नागसेनस्य च क्षमा प्रार्थनीया" इति उक्तवान्।

तत् श्रुत्वा युवकः मन्दहासं प्रदर्शयन् "किञ्चित्कालानन्तरम् अहं महाराजस्य निर्णयं विरुद्ध्य उन्नतन्यायास्थानं मम व्यवहारं नेष्यामि। भवन्तः मां दण्डयन्तु नाम। यस्य कस्यापि क्षमां न प्रार्थयामि अहम्। प्राणभिक्षा अपि मास्तु। भिक्षया न आनीताः मम प्राणाः।" इति उक्तवान्।

तत् वचनं श्रुत्वा राजा कोपेन "अस्मिन् राज्ये राजापेक्षया उन्नतन्यायाधिकारी कोऽपि अस्ति वा? मरणं गच्छन्तं भवन्तं करुणया विमोचयितुम् आगतवान्। मम पुरतः उन्नतन्यायास्थानम् इति वदति वा? कियान् गर्वः भवतः?" इति पृष्टवान्।

महाराजस्य वचनेन किञ्चिदपि अविचलितः युवकः - "राजा नाम भूमौ भगवतः प्रतिनिधिः इति ज्येष्ठाः वदन्ति। स्वार्थस्य लेपनं विना पक्षपातं विना च न्यायप्रदर्शनं महाराजस्य कर्तव्यम्। यदि तथा कर्तुं सः न शक्नोति, तर्हि तस्य निर्णयं पुनः परिशीलयितुम् उत्तमं निर्णयं उद्घोषयितुं च सः भगवान् एकः एव शक्नोति। भवताम् निर्णयं विरुद्ध्य मया तस्मिन् उन्नतन्यायास्थाने व्यवहारः नीयते। भवन्तः निश्चिन्ततया भवताम् निर्णयानुगुणं मां दण्डयन्तु" इति उक्तवान्।

युवकस्य वचनं शृण्वतः महाराजस्य मस्तिष्के ज्ञानोदयः अभवत्। न्यायपालन-महत्त्वस्य पवित्रतां सः ज्ञातवान्।

राजा लीलाधरः तत्क्षणमेव कारागृहात् युवकस्य विमोचनं कृतवान्।

प्रातःकालसमये राजा परिवर्तितः आसीत्। तदारभ्य सः राज्ञीविषयकं मोहं नियन्त्रणे स्थापयित्वा, नागसेनस्य गर्वः यथा न्यूनः भवेत् तथा कृतवान्। प्रजाभ्यः उत्तमन्यायः यथा लभ्येत तथा जागरूकया राज्यं पालयन् "धर्मप्रभुः" इति नाम्ना प्रसिद्धः जातः च।





# स्नेहे कालुष्यम्

वराहस्वामी नागपुरस्य प्रमुखः वणिक्। एकदा शेषनाथः नाम बाल्यस्नेहितः तस्य समीपम् आगत्य उक्तवान् - "भोः! जीवनयात्रायां कारणान्तरैः महान् आघातः अनुभूतः मया। इदानीं तु मातापितरौ, पत्नीपुत्रान् च पोषयितुम् असमर्थः सञ्जातः अस्मि। बाल्यस्नेहं स्मरन् भवान् किमपि उपकुर्यात् इति भवतः समीपम् आगतवान् अस्मि। माम् उद्धरतु भवान्" इति।

वराहस्वामी शेषनाथः च बाल्यतः अपि सहपाठिनौ। सहोदरौ इव निवसतः तौ। शेषनाथः मितभाषी। दाक्षिण्यशीलः च। वराहस्वामी चटुलः, कोलाहलशीलः च।

किन्तु यदा तौ प्रौढौ जातौ तदा वराहस्वामी शेषनाथस्य उदारतां सज्जनतां च सम्यक् ज्ञातवान्। तौ आत्मीयौ स्नेहितौ सञ्जातौ। दैववशात् वराहस्वामी वाणिज्यार्थं नगरं गतवान्। शेषनाथः ग्रामे एव स्थितवान्।

इदानीम् एवं दीनतया प्रार्थयमानं शेषनाथं दृष्ट्वा खिन्नः वराहस्वामी उक्तवान् - "भोः मित्र! किं वदति भवान्। आपत्काले स्थितस्य मित्रस्य साहाय्यं यदि न करोमि तर्हि मम जीवितेन किं वा प्रयोजनम्? ऐश्वर्यस्य किं वा सार्थक्यम्? ग्रामे भवदीयं यद्यत् अस्ति तत्सर्वं विक्रीय अत्र एव आगच्छतु। यावत् अस्ति तावत् वाणिज्ये योजयतु। अथवा भवान् मम वाणिज्ये भागहरः भवतु। मयि विद्यमाने भवतः काऽपि चिन्ता मास्तु" इति।

शेषनाथः वराहस्वामी यथा उक्तवान् तथा आचरितवान्। वराहस्वामिनः साहाय्यतः शेषनाथः नगरे वासार्थम् उत्तमं गृहं प्राप्तवान्। शेषनाथस्य आवश्यकताः तदा तदा पृच्छन् वराहस्वामी ताः सर्वाः समये पूरयति स्म। एतावदेव न, प्रतिमासं शेषनाथाय सः सहस्रं रूप्यकाणि वेतनत्वेन ददाति स्म च।

एतेन शेषनाथस्य जीवनं सुव्यवस्थितं



जातम्। तस्य गृहसदस्याः सर्वे वराहस्वामिनं देवम् इव पूजयन्ति स्म।

वराहस्वामी शेषनाथं वदति - "भवान् मदधीनः कश्चन उद्योगी न। वाणिज्ये लाभांशे भवतः अपि समानः भागः अस्ति एव। केवलं मम साहाय्यं भवान् आचरति चेत् न पर्याप्तम्। मम लोपदोषान् अपि काले निस्सङ्कोचं सूचयितुम् अर्हति" इति।

किन्तु शेषनाथः आत्मनः कार्यमितिं सम्यक् जानाति। अतः सः वराहस्वामिनः विषये सर्वदा विनयेन एव व्यवहरन् तदीयकार्येषु स्थितानाम् उत्तमगुणानां प्रशंसां करोति स्म। लोपविषये कदापि एकशब्दम् अपि न वदति स्म सः।

शेषनाथस्य व्यावहारिकं ज्ञानम् अधिकम्। अतः तस्य मार्गदर्शनं प्राप्तुं बहवः जनाः समीपम् आगच्छन्ति स्म। 'शेषनाथः उचितं मार्गदर्शनं करोति' इति ख्यातिः नगरे सर्वत्र व्याप्ता आसीत्।

कदाचित् वराहस्वामी आश्चर्येण शेषनाथं पृष्टवान् - "भवान् एतावत्प्रतिभाशाली इति अहं न ज्ञातवान् एव। सर्वेषां मार्गदर्शनं कुर्वन् भवान् मम मार्गदर्शनं किमर्थं न करोति? मम दोषान् किमर्थं न वदति?" इति।

"यदि भवति दोषाः स्युः तर्हि किल मम वक्तुम् अवकाशः!" इति प्रतिप्रश्नं कृतवान् शेषनाथः। एतत् श्रुत्वा वराहस्वामी आत्मनि गर्वम् अनुभूतवान्।

एवं स्थिते कदाचित् वराहस्वामिनः पुत्रः काञ्चित् निर्धनकुलोत्पन्नां कन्यां परिणेतुं सिद्धः अभवत्। वराहस्वामिनः तु एतत् न इष्टम्। अतः सः असम्मतिं सूचितवान्। तदा कुपितः पुत्रः गृहं त्यक्तुं सिद्धः अभवत्।

"गच्छति चेत् गच्छतु नाम। दारिद्र्यं नाम किम् इति अनुभवेन जानातु सः। तदा एव ज्येष्ठानां वचनस्य महत्त्वं जानीयात्" इति कोपामिश्रितस्वरेण शेषनाथम् उक्तवान् वराहस्वामी। शेषनाथः तु किमपि अनुक्त्वा मौनेन शिरः चालितवान्।

तत्समये वराहस्वामिनः इव वणिजः धनगुप्तस्य अपि एषा एव समस्या आगता। किन्तु सः वराहस्वामी इव कोपं अप्रदर्शयन् तां स्नुषात्वेन अङ्गीकृतवान्। वराहस्वामी एतां वार्तां ज्ञातवान्। एतादृशपरिस्थितेः

विषये तस्य असूया स्यात्। मम सुखं शान्ति च प्रायः सः न इच्छति" इति।

एवं संशयपिशाचेन ग्रस्तः वराहस्वामी तद्दिनतः शेषनाथं सुसूक्ष्मं परीक्षितुम् आरब्धवान्। 'इतरान् सर्वथा उपदिशन् एषः मम विषये सर्वधा मौनं तिष्ठति' इति निर्णीतवान् वराहस्वामी।

"मम साहाय्येन उज्जीवितः एषः शेषनाथः एव मम साहाय्यं न आचरति। एवं स्थिते इतरेषां का कथा! इतःपरं कस्मै अपि उपकारः न करणीयः" इति सङ्कल्पितवान् सः।

पुनः दिनद्वयाभ्यन्तरे गुरुः सदानन्दः वराहस्वामिनं द्रष्टुम् आगतवान्। एषः सदानन्दः वराहस्वामिनः कुलगुरुः इव। एतत्सन्दर्भे यदा सदानन्दः आगतः तदा साधकवाधकतां चर्चयितुं सः धनगुप्तस्य गृहं गतवान्।

तदा धनगुप्तः उक्तवान् - "एकवारं मतिभेदः उत्पन्नः चेत् पुनः ऐकमत्यं न सिध्यति एव। एतादृशसन्दर्भे विवाहः यदि अङ्गीक्रियते तर्हि पुत्रः स्नुषा इत्यादयः अस्मान् कृतज्ञताभावेन पश्यन्ति। भक्ति भावेन ज्येष्ठानां सेवां कुर्वन्ति च। कोपेन पुत्रः गृहतः निष्कासितः चेत् किं सिध्यति? पुत्रः हत्यच्युतः भवति। गृहे यजमान्याः अपि दुःखम्। सर्वदा असमाधानं गृहे दृश्येत। धनं यावदपि भवतु नाम। सुखं शान्तिः च यदि न स्यात् तर्हि किं तेन धनेन?" इति।

तदा वराहस्वामी सन्तोषं प्रकटयन् -



"भवान् तु महाविवेकशीलः। एतादृशः विचारः मम मनसि न आगतः एव। सर्वेषां मार्गम् उपदिशतः शेषनाथस्य मनसि अपि एषः विचारः न स्फुरितः इति तु आश्चर्यम् एव" इति उक्तवान्।

तदा धनगुप्तः आश्चर्येण - "तथा किमर्थं वदति? वस्तुतः एषः मार्गः शेषनाथेन एव सूचितः। मया तदनुगुणं व्यवहारः कृतः" इति उक्तवान्।

एतत् श्रुत्वा वराहस्वामी क्षणकालं स्तब्धः। सः मौनं स्वगृहम् आगतवान्। 'शेषनाथः एतद्विषये प्रष्टव्यः' इति एकवारं मनसि विचारः आगतः। किन्तु अपक्षणे अन्यः एव विचारः आगतः - "शेषनाथः दीनावस्थातः उत्तमावस्थां प्राप्तवान्। आरम्भतः उत्तमावस्थायां स्थितस्य मम

वराहस्वामी शेषनाथस्य व्यवहारम् आक्षिपन् आत्मनः खेदं निवेदितवान्।

तदा सदानन्दः उक्तवान् - "किं भोः? किं वदति भवान्? अत्र मम आगमनार्थं शेषनाथः एव कारणम्। 'वराहस्वामिनः पुत्रस्य विवाहविषये इदानीं भवतः मार्गदर्शनस्य अपेक्षा अस्ति' इति सः मां सूचितवान्। अतः एव अहम् अत्र आगतवान्। वस्तुतः किं प्रवृत्तम्?" इति।

वराहस्वामी आश्चर्यं प्रकटयन् - "एषः शेषनाथः स्वयं योग्यमार्गम् उपदेष्टुं जानन् अपि तथा न कृतवान्। भवन्तम् अत्र आनायितवान्। किमर्थं सः एवं कृतवान्?" इति पृष्टवान्।

तदा सदानन्दः मन्दहासं प्रकटयन् उक्तवान् - "भवान् तु बाल्यतः उत्तमावस्थायाम् अस्ति। शेषनाथः तु एकवारं दरिद्रावस्थां प्राप्य भवतः साहाय्यं पृष्टवान्। भवद्विषये सः विशेषतः कृतज्ञः अस्ति। अतः एव भवन्तम् उपदेष्टुं सः सङ्कोचम् अनुभवति" इति।

"तत्र सङ्कोचः किमर्थम्? यथा निस्सङ्कोचं साहाय्यं पृष्टं तथैव लोपदोषाः अपि वक्तव्याः। अत्र सङ्कोचस्य कः अवकाशः?" इति कुतूहलेन पृष्टवान् वराहस्वामी।

"यः उपकारं कृतवान् तस्मै मार्गम् उपदेष्टुं यदि शेषनाथः न शक्नोति तर्हि तत्र तस्य दोषः कोऽपि नास्ति। दोषः तु भवतः व्यवहारे अस्ति" इति उक्तवान् सदानन्दः।

प्रथमक्षणे सदानन्दस्य वचनस्य तात्पर्यं न गृहीतवान् वराहस्वामी। किन्तु क्षणकालं चिन्तनानन्तरं सः गुरोः भावं सम्यक् गृहीतवान्।

"अहम् उपकारं कृतवान् इति भावेन अहं किञ्चिदिव अहम्भावेन व्यवहारं कृतवान्। वस्तुतः शेषनाथेन सह स्नेहेन व्यवहारं न कृतवान्" इति ज्ञातवान् वराहस्वामी। एतेन तस्य मनः परिशुद्धम् अभवत्।

तद्दिने एव वराहस्वामी स्वव्यवहारे परिवर्तनम् आनीतवान्। शेषनाथेन सह मैत्रीपूर्णं व्यवहारम् आरब्धवान्। अल्पे एव काले तौ आत्मीयौ स्नेहितौ सञ्जातौ।



# स ञ्च य:

चन्द्रचूडः व्ययविषये उदारः। मितव्ययः नाम कः इत्येव सः न जानाति। 'इतःपरं जीवने सञ्चयः करणीयः' इति कदाचित् सः चिन्तितवान्। 'तदर्थं किं करणीयम्?' इति स्नेहितं रङ्गनाथं पृष्टवान्।

रङ्गनाथः तस्य हस्ते एकं मृत्तिकानिर्मितं धनपात्रं दत्त्वा - "प्रतिदिनं नियमितरूपेण अत्र नाणकानि स्थापयतु। अद्य एव सञ्चयस्य आरम्भः भवतु" इति उक्तवान्।

चन्द्रचूडः यद्यपि तद्दिनतः एव सञ्चयम् आरब्धवान्, किन्तु सप्ताहाभ्यन्तरे अनिवार्यकारणतया धनपात्रं भञ्जयित्वा तस्य धनं व्ययीकृतवान्। एतत् श्रुत्वा रङ्गनाथः अयसः धनपात्रं निर्माय चन्द्रचूडस्य हस्ते दत्तवान्। तत् कीलयित्वा कुञ्चिकां गृहपार्श्वे स्थिते उद्याने क्षिप्तवान्।

पञ्चषदिनानाम् अनन्तरं यदा रङ्गनाथः चन्द्रचूडस्य गृहम् आगतवान् तदा सः उद्याने किमपि अन्विष्यन् आसीत्।

"दिनद्वयतः धनपात्रस्य कुञ्चिकायाः अन्वेषणे निरतः आस्मि" इति उक्तवान् चन्द्रचूडः।

तदा रङ्गनाथः हसन् - "दिनद्वयं यावत् तेन धनेन विना जीवनं यापितवान् किल? तथैव इतःपरं अपि आचरणीयम्। लघुकार्यार्थम् अपि भवान् सुरक्षितं स्थापितस्य धनस्य उपयोगं करोति। एषः एव भवतः दोषः। इतःपरं भवान् कुञ्चिकां न प्राप्स्यति। वृथा प्रयासः मास्तु" इति उक्तवान्।

चन्द्रचूडः एतत् वचनम् अङ्गीकुर्वन् - "कथञ्चित् मद्द्वारा अपि भवान् सञ्चयं कारितवान् एव किल!" इति उद्गारं प्रकटीकृतवान्।





# वञ्चितःवञ्चकः

पूर्वं कस्मिंश्चित् ग्रामे कश्चन कृषिकः आसीत्। तस्य एकः एव पुत्रः। एषः पुत्रः न तथा बुद्धिमान्। यदा पुत्रः प्राप्तवयस्कः जातः तदा पिता तस्य विवाहं कारितवान्। स्नुषारूपेण आगता कन्या तु अतीव बुद्धिमती।

एकदा कृषिकस्य पुत्रः गृहस्य पुरतः उपविश्य परशोः दण्डं समीकुर्वन् आसीत्। तदा त्रयः राजपुरुषाः आगत्य - "वयं समुद्रराजस्य सेवकाः। अस्माकं महाराजः भवन्तम् आहूतवान् अस्ति। भवता इदानीम् एव तत्र आगन्तव्यम्" इति उक्तवन्तः।

वस्तुतः आगताः एते न समुद्रराजस्य सेवकाः, अपि तु राक्षसराजस्य दूताः। कृषिकस्य पुत्रः एतत् न जानाति।

"भवतां महाराजः मां किमर्थम् आहूतवान्? कीदृशं कार्यम् अस्ति तत्र?" इति पृष्ठवान् कृषिकपुत्रः।

"अस्मिन् देशे भवादृशः अन्यः बुद्धिमान् नास्ति इति श्रुतम्। अन्येन कर्तुम् असाध्यम् एकं कार्यं भवद्द्वारा कारणीयम् इति चिन्तयति अस्माकं महाराजः। अतः आगन्तुम् उक्तवान् सः" इति उक्तवन्तः राजभटाः।

"बौद्धिककार्यं न मम, अपि तु मम पितुः। अतः भवन्तः तम् एव भवतां राज्यं नेतुम् अर्हन्ति। सः इदानीं क्षेत्रं गतवान्। सः सायङ्काले गृहं प्रत्यागच्छति। कार्यस्य मध्ये कदापि न आगच्छति" इति उक्तवान् कृषिकपुत्रः।

"एवं तर्हि भवान् पित्रा सह एव आगच्छतु। वयं पुनः अत्र न आगच्छामः। अस्माकं नौका नौकास्थाने अस्ति। श्वः प्रातः भवान् पित्रा सह तत्र आगच्छतु। ततः वयं भवन्तौ नयामः" इति उक्त्वा ते कृष्णवर्णीयाः राजभटाः ततः गतवन्तः।

"पञ्चाशद्वर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

तद्दिने सायङ्काले पिता यदा गृहं प्रत्यागतः तदा पुत्रः उक्तवान् - "तात! आवां नेतुं समुद्रराजः नौकां जनान् च प्रेषितवान्। आवयोः किमपि विशेषसाहाय्यम् इच्छति सः। यदि वयं साहाय्यं करिष्यामः तर्हि विशेषपारितोषिकं लप्स्यते। ते नौकास्थाने अस्माकं प्रतीक्षायां सन्ति" इति।

"ते समुद्रराजपरतया आगताः इत्यत्र किं प्रमाणम्? तौ अभिज्ञानरूपेण किमपि आनीतवन्तः वा?" इति कृषिकः पुत्रं पृष्टवान्।

"तथा किमपि न आनीतवन्तः। ते पुनः अत्र न आगच्छन्ति। ते उक्तवन्तः यत् श्वः भवन्तः आगच्छन्ति चेत् वयं नौकया भवतः नयामः इति" इति उक्तवान् पुत्रः।

"नौकास्थानपर्यन्तं गमनं वा? तत् तु मया न शक्यते। यतः तत् दूरे अस्ति। यदि मार्गदैर्घ्यं न्यूनीक्रियेत तर्हि आगच्छेयम्" इति उक्त्वा कृषिकः स्वकार्याणि समाप्य शय्यां प्रसार्य शयनं कृतवान्।

कृषिकपुत्रः समुद्रराजस्य आह्वानवार्तां स्वपत्न्यै उक्त्वा - "मार्गस्य दैर्घ्यं यदि न्यूनं न भवेत् तर्हि अहं श्वः न आगमिष्यामि इति वदति किल पिता" इति खेदं प्रकटितवान्।

तदा तस्य पत्नी - "मार्गस्य दैर्घ्यस्य न्यूनीकरणार्थं कश्चन उपायः अस्ति। नौकास्थानप्राप्तिपर्यन्तं भवान् कथां कथयन् गच्छतु। तेन मार्गक्रमणं न ज्ञायते इत्यतः दैर्घ्यं न्यूनीभवति इव। प्रयत्नं करोतु। लभ्यमानं पारितोषिकं किमर्थं त्यक्तव्यम्?" इति उक्त्वा कथां श्रावितवती।



कृषिकपुत्रः स्वपत्न्याः बुद्धिमत्ताविषये बहु सन्तुष्टः अभवत्। सः अनन्तरदिने प्रातः एव उत्थाय, पितरम् उत्थाप्य "मार्गस्य दैर्घ्यं न्यूनीभवति चेत् आगच्छामि इति उक्तवान् किल? अहं दैर्घ्यं न्यूनीकरिष्यामि। आगच्छतु" इति उक्तवान्।

कृषिकः तदीयः पुत्रः च समुद्रतीरं प्रति प्रस्थितवन्तौ। मार्गे पुत्रः कथां कथयन् गतवान्। एवं तौ नौकास्थानं प्राप्तवन्तौ। नौकास्थाने एका प्राचीना नौका आसीत्। कृष्णवर्णीयाः त्रयः विकृतपुरुषाः तत्र आसन्।

"कीदृशी नौका एषा! राक्षसानां नौका इव अस्ति एषा" इति उक्तवान् कृषिकः।

कृष्णवर्णीयाः एतौ दृष्ट्वा - "अस्माकं



महाराजस्य नौकासु एषा एव अतीव उत्तमा। एतस्याः वेगः असदृशः। अतः एव महाराजः एतां प्रेषितवान्" इति उक्तवन्तः।

कृषिकः तत्पुत्रः च नौकायाम् उपविष्टवन्तौ। कृष्णवर्णीयाः नौकां चालितवन्तः। मन्दगत्या गच्छन्ती सा नौका अल्पे एव काले किञ्चन द्वीपं प्राप्तवती। तस्मिन् द्वीपे कुत्रापि वृक्षः, सस्यं, गुल्मः वा न आसीत्। शिलामयम् आसीत् तत् द्वीपम्। अत्र राक्षसाः निवसन्ति।

अत्र आगमनानन्तरं कृषिकेण तत्पुत्रेण च वस्तुस्थितिः ज्ञाता। किन्तु आगमनं तु सञ्जातम् एव। इतःपरं किं वा कर्तुं शक्येत?

कृष्णवर्णीयाः जनाः एतौ नौकातः अवतार्य स्वराजसमीपं नीतवन्तः। राक्षसराजः तु भटानाम् अपेक्षया अपि अधिकं कृष्णवर्णीयः। अतीव घोरं विकृतं च रूपं तस्य।

"मां मम पुत्रं च किमर्थं वा एतावद्दूरम् आनायितवान्?" इति धैर्येण पृष्टवान् कृषिकः।

"तावत् विशेषकार्यं किमपि नास्ति। अस्माकं समीपे एकं भाण्डम् अस्ति। तस्य अधः अग्निः ज्वालनीयः। किन्तु तत् कर्तुं वयं न शक्नुमः। अतः भवन्तौ आनीतवन्तः। एतत् कार्यं कृत्वा एव भवन्तौ सजीवं गन्तुम् अर्हतः।" इति उक्तवान् राक्षसराजः।

"भाण्डं कुत्र अस्ति इति प्रथमं प्रदर्शयन्तु।

राक्षसाः तौ एकं विशालं प्रकोष्ठं नीतवन्तः। तत्र द्विपुरुषप्रमाणकम् एकं महाभाण्डम् आसीत्। कृषिकः राक्षसान् बहिः गन्तुम् आदिश्य द्वारं पिधाय कीलितवान्। अनन्तरं पिता पुत्रः च भाण्डं परितः परिक्रम्य सर्वं परिशीलितवन्तौ।

कृषिकः स्वपुत्रम् उक्तवान् - "पुत्र! एतस्य भाण्डस्य माहात्म्यं भवान् प्रायः न जानाति। अक्षयभाण्डम् एतत्। अस्माकं महाराजस्य तातपादाः एतस्मिन् भाण्डे अन्नं पक्त्वा निरन्तरम् अन्नदानं कुर्वन्ति स्म। तेषां काले निर्गतिकः कोऽपि न भवति स्म। तत् भाण्डम् एते चोरयित्वा अत्र आनीय स्थापितवन्तः" इति।

"इदानीम् एतेषां राक्षसानां वञ्चनाजालतः पलायनं कथं वा शक्येत?" इति चिन्तापूर्णस्वरेण पृष्ठवान् कृषिकपुत्रः।

"तद्विषये चिन्ता मास्तु। तदर्थम् अहम्



तैः सह भवतः कुमारद्वयम् अपि गच्छतु। अन्यथा भवत्सेवकेषु तस्याः विश्वासः न उत्पद्येत" इति उक्तवान् कृषिकः।

"तर्हि यावत् मम सेवकाः काष्ठानि न आनयन्ति तावत् भवन्तौ बन्धने स्थापयिष्यामि" इति उक्त्वा राजा तौ तस्मिन् भाण्ड प्रकोष्ठे स्थापयित्वा कीलितवान्।

राक्षसराजस्य पुत्रौ कृषिकगृहं गत्वा तां स्नुषाम् उक्तवन्तौ - "आवां राक्षराजस्य पुत्रौ। भवत्याः पतिः श्वशुरः च अस्माकं राज्ये स्तः। भवत्याः सकाशतः नवविध वृक्षाणां काष्ठानि नेतुम् आवाम् आगतवन्तौ। भवत्याः श्वशुरेण उक्तं यत् प्रश्नसमनन्तरम् एव भवत्या वस्तूनि दीयन्ते इति। अतः कृपया शीघ्रं ददातु" इति। अपेक्षितानि अग्निशिलादीनि च सूचितएकम् उपायम् आयोजयिष्यामि" इति उक्त्वा कृषिकः "भो भोः! कः तत्र?" इति आहूतवान्।

ते सेवकाः आगत्य पृष्ठवन्तः - "किम् आवश्यकम्? भाण्डस्य अधः अग्निः ज्वालितः वा?" इति।

"अग्निज्वालनं न सुलभम्! किन्तु किं वायुना अग्निः ज्वलति वा? तदर्थं काष्ठानि अपेक्षितानि। तत्रापि आम्रस्य, वटवृक्षस्य, अश्वत्थस्य, जम्बूवृक्षस्य, सालवृक्षस्य, पूगवृक्षस्य, नारिकेलवृक्षस्य, पनसवृक्षस्य, वेणुगुल्मस्य च काष्ठानि अत्यावश्यकानि। कार्पासः अग्निशिला, अयःशालकाः इत्यादयः अपि अपेक्षिताः। तानि आनयन्तु। क्षणमात्रेण अगिंन ज्वालयिष्यामि" इति उक्तवान् कृषिकः।

राक्षसाः राजसमीपं गत्वा कृषिकस्य अभिप्रायं निवेदितवन्तः। तदा राजा स्वयं कृषिकस्य समीपम् आगत्य उक्तवान् - "भोः! किं वदति भवान्! अस्माकम् अस्मिन् द्वीपे तृणानि अपि न उत्पद्यन्ते। काष्ठानां का कथा? एकम् अपि सस्यम् अत्र न दृश्यते इति भवान् जानाति एव। अतः अन्यम् उपायं चिन्तयतु" इति।

"काष्ठैः विना अग्निज्वालनम् अशक्यम् एव। यदि काष्ठानि भवतः द्वीपे न स्युः तर्हि अन्यदेशतः आनाययतु। अथवा मम गृहतः एव आनाययतु। मम गृहे मम स्नुषा अस्ति। अतः तस्याः समीपं द्वित्रान् सेवकान् प्रेषयतु।

वन्तौ।

'राक्षसद्वीपे काऽपि वञ्चना प्रवृत्ता' इति सा ज्ञातवती एव। अतः सा राक्षसपुत्रौ उक्तवती - "भवन्तः यद्यत् पृष्टवन्तः तत्सर्वं पार्श्वप्रकोष्ठे अस्ति। तत्र गत्वा स्वीकर्तुम् अर्हन्ति भवन्तः" इति।

"तथैव अस्तु" इति उक्त्वा तौ राक्षसकुमारौ अन्धकारमयं तत् प्रकोष्ठं प्रविष्टवन्तौ। कृषिकस्य स्नुषा झटिति द्वारं पिधाय दृढेन तालेन कीलितवती।

बहिः आगत्य सा राक्षसराजस्य सेवकान् उक्तवती - "भवतां राजकुमारौ उभौ अपि अन्धकारमये प्रकोष्ठे स्तः। तयोः प्रवेश-समनन्तरम् एव सः प्रकोष्ठः कीलितः अभवत्। एवं कीलनं तस्य प्रकोष्ठस्य वैशिष्ट्यम्। तस्य कुञ्चिका कुत्र अस्ति इति अहं नु न जानामि। मम श्वशुरेण पतिना च अत्र आगत्य अन्वेषणं कृतं चेत् कुञ्चिका लभ्येत। एतां वार्तां भवतां महाराजं निवेदयन्तु" इति।

राक्षससेवकाः दुःखेन स्वयाज्य प्रत्यागतवन्तः। कृषिकगृहे प्रवृत्तं सर्वं, कृषिकस्नुषायाः वचनानि च महाराजाय निवेदितवन्तः च।

एतां वार्तां श्रुत्वा राक्षसराजः कुपितः। किन्तु यदि कोपेन कृषिकस्य तत्पुत्रस्य च काऽपि हानिः क्रियेत तर्हि राक्षसकुमारयोः अपि हानिः भवेत् किल? पुत्रयोः हानिं किम्? अल्पं क्लेशम् अपि न इच्छति राक्षसराजः। अतः सः कृषिकं तत्पुत्रं च तत्क्षणे एव बन्धविमुक्तौ कृतवान्।

किन्तु कृषिकः उक्तवान् - "भोः! पारितोषिकं प्राप्तुम् आवाम् आगतवन्तौ। अतः अन्यराज्यतः वा भवान् काष्ठानि आनाययतु। अग्निं ज्वालयित्वा पारितोषिकं च स्वीकृत्य एव आवां गच्छावः। इतः गतयोः आवयोः पुनरागमनं न भविष्यति एव। अविलम्बेन काष्ठव्यवस्थां कारयतु" इति।

"पारितोषिकं विना एतौ न गच्छतः। अधिकपारितोषिकदानेन वा एतौ तोषणीयौ एव" इति चिन्तयित्वा राक्षसराजः एकैकस्मै अपि यथेष्ठं सुवर्णनाणकानि दत्तवान्।



दक्षिण-आफ्रिकादेशे भल्लूकानां काचन जातिः अस्ति येषां च नेत्रं परितः उपलोचन-सदृशं पटलं भवति। अतः एतान् 'उप-लोचनसहिताः भल्लूकाः' इति वदन्ति जनाः

# विचित्रम् उपलोचम्





# अपायः

'व्याघ्रभ्रमराः' इति कथ्य-मानाः समुद्रस्थाः आस्ट्रेलियन् बाक्स् जल्ली नामकाः मीनाः अत्यन्तम् अपायकारिणः। तेषां शरीरेषु सामान्यतः कोटिशः तन्तुसदृशाः केशाः राशिरूपेण तिष्ठन्ति। एते मानवान् द्वित्रेषु निमेशेषु मारयितुं समर्थाः।

कम्बलकीटस्य शरीरे सामान्यतः २००० खण्डाः भवन्ति। मानवशरीरे तु केवलं ७०० खण्डाः!



# खण्डबाहुल्यम्

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अजगरः - | Python |
| अनुधावनम् - | Following |
| अभिप्रेतः - | Meant |
| उत्तरीयम् - | Upper garment |
| उपायनम् - | Gift |
| कटाक्षः - | Side-glance |
| कण्डोलः - | Basket |
| कार्पासः - | Cotton |
| कालबाह्यम् - | Outdated |
| कुञ्चिका - | Key |
| कुविन्दः - | Weaver |
| खलीनः - | Bit of a bridle |
| चटुलः - | Active |
| छदिः - | Roof of a house |
| छोटिका - | Snapping the thumb and fore finger together |
| जम्बूवृक्षः - | Rose apple tree |
| दशा - | Edge of a garment |
| द्विचक्रिका - | Bicycle |
| धूमपानम् - | smoking |
| नौकास्थानम् - | Port |
| पनसः - | Jack tree |
| परशुः - | Axe |
| पर्व - | Festival |
| पलितम् - | Gray haired |
| पिपासा - | Thirst |
| पूगवृक्षः - | Areca nut tree |
| प्रस्फुरिता - | Trembled |
| भल्लूकः - | Bear |
| भागहरः - | Partner |
| भाण्डम् - | Vessel |
| मकरः - | Crocodile |
| मशकः - | Mosquito |
| मृगयाविहारः - | Hunting |
| वमन् - | Vomiting |
| वेणुः - | Bamboo |
| वैयर्थ्यम् - | Uselessness |
| व्रणितः - | Wounded |
| शावकः - | Cub |
| श्यालः - | Wife's brother |
| समीकरणम् - | Repair |
| सूचिका - | Needle |
| सेतुः - | Bridge |
| हरिणः - | Deer |
| हृदयस्पन्दनम् - | Heart-beat |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां सप्टम्बर्-८६ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गराव्मार्ग, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'मे' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—**

**प्रथमचित्रम् - भक्तिः ज्ञेया जपं दृष्ट्वा।**

**द्वितीयचित्रम् - रोगो ज्ञेयः जिह्वां दृष्ट्वा।**

**प्रेषकः— श्री शेषगिरि राव्, बी-६, सैनिक स्कूल् केम्पस्, बिजापुरम्, कर्णाटकम्-५८६ १०२**

---

# भवन्तः जानन्ति वा ? (उत्तराणि)

**१. सिसिली। २. जार्ज वाषिङ्गटन्। ३. रजिया बेगम्। ४. हुमायून्। ५. सरोजिनी नायिड।**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

The stories, articles and designs contained herein are exclusive property of the Publishers and copying or adapting them in any manner will be dealt with according to law.

रेनू की सखियों से कट्टी
इसे पढ़ा देतीं वो पट्टी
अब इसने भी सोच लिया है
उनकी ये कर देगी छुट्टी
अपने एको पेन के सेट से
घंटों रंगती फूल औ' तितली
राजा, रानी, गुड्डा, गुड़िया
भूल के सब कुछ अगली पिछली
एको हरे और एको पीले
लाल और ऑरेंज, भूरे, नीले
काले, बैंगनी, वायलेट, गुलाबी
अब तो स्केच पेन एको ही लें.








**एको**
**स्केच पेन** रंगों से यारी, मौज-मस्ती तुम्हारी!
प्रीसिज़न राइटिंग पॉइन्ट्स प्रा. लि. १८, सुभाष रोड, विले पारले (पूर्व), बम्बई-४०० ०५७.
फोन : ६०४०३०५. ६०४३५५६

# कुड्मलः नष्टः किल?

| | |
|---|---|
| पतिः - भोः मम श्वेतयुतकं कुत्र? | Where is my white Shirt? |
| पत्नी - पूर्णबाहुकम् उत अर्धबाहुकम्? | Which one do you say full-shirt or half-shirt? |
| पतिः - पूर्णबाहुकम्। गतमासे सीवितम् आसीत् किल, तत्। | The full-shirt stitched last month. |
| पत्नी - तत् ह्यः रजकाय दत्तवती। | I gave it to the laundry yesterday! |
| पतिः - तस्य कोषे एका चिटिका आसीत्। | There was a small note in its pocket. |
| पत्नी - रक्तवर्णया मष्या लिखितं किल? तत् उत्पीठिकायाः अन्तःपेटिकायां स्थापितवती। | Was it written in red ink? I have put it in the table drawer. |
| पतिः - भोः, एतस्य युतकस्य कुड्मलः नष्टः किल? | See, in this shirt a button is missing! |
| पत्नी - रक्तयुतकस्य किल, अतः एव अहं तत् युतकं पार्श्वे स्थापितवती आसम्। श्वेतयुतकं धरन्तु तावत्। | That is the red shirt. That is why I have put it outside. Wear the other white shirt. |
| पतिः - न भोः, एतस्य ऊरूकस्य न युज्यते | No, that doesn't match with this pant. |
| पत्नी - तर्हि अन्यत् युतकं धरन्तु। एतस्य कुड्मलं मध्याह्ने योजयिष्यामि। | Then, wear some other pant, I'll fix the button in the afternoon |
| पतिः - करवस्त्रम् एकम् अपि न दृश्यते। | Not a single handkerchief is to be seen here! |
| पत्नी - किं भोः, सर्वं सज्जीकृत्य हस्ते अर्पणीयं किल! तत्रैव कपाटिकायाम् अस्ति। पश्यन्तु। | You want everything to be ready and on hand. See, it is there. |
| पतिः - मम विलम्बः जातः ....। | Oh, God! It is already late! |
| पत्नी - अष्टवादने उत्थितं चेत् विलम्बः कुतः वा न भवेत्? | Why wouldn't it be late if you get up at 8' O clock? |
| पतिः - पश्यतु। एतत् युतकद्वयं समीकरणार्थं दातव्यम्। अन्तर्युतकं क्षालनीयं च। अहम् आगच्छामि। | You have to get these two shirts ironed and also wash the underwear. Okeay? I am out now. |

# प्राचीन-भारतस्य भव्यता तथा तेजस्विता

# चन्दमामायां

प्रत्येकमासस्य कथासु दर्शितम् अस्ति ।

भारतस्य सर्वाधिकप्रसारयुता बालानां मासिकी ।

**चन्दमामायाः** लोकप्रियतायाः एकमात्रं प्रमाणं यत् प्रतिमासम् एतां १,२०,००,००० बालकाः पठन्ति ।

**चन्दमामायाः** प्रसारसङ्ख्या सामान्यतः ८,००,००० अस्ति या प्रतिमासं भारतस्य तथा पूर्व-एशियादेशानां कुटुम्बान्, पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।